## अथ लेख्यम्।

अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक्तथा।
निर्णयश्च यथा तस्य यथा चावधृतं स्वयम् ॥१८३॥
एतद्यथाक्षरं लेख्ये यथापूर्वं निवेशयेत्।
अभियोक्तभियुक्तानां वचनं प्राड्विवेशयेत् ॥१८४॥
सभ्यानां प्राड्विवाकस्य कुलानां वा ततः परम् ॥
निश्चयं स्मृतिशास्त्रस्य मतं तत्रैव लेखयेत् ॥१८५॥
सर्वे * जानपदान् वर्णान् लेख्ये तु विनिवेशयेत् ॥

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकं।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥१८६॥
सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः।
यथा लेख्यविधौ तद्वत् स्वहस्तं तत्र दापयेत् ॥१८७॥

अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः।
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना।
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥१८८॥

अन्यवाद्यादिहीनेभ्य इतरेषां प्रदीयते।
वृत्तानुवादसंसिद्धम्तच्च स्याज्जय पत्रकम् ॥१८९॥
ग्राहकेण स्वहस्तेन लिखितं साक्षिवर्जितम्।
स्वहस्तलेख्यं विज्ञेयं प्रमाणं तत्स्मृतं बुधैः ।१९०॥
चातुर्विद्यपुरश्रेणीगणपौरादिकस्थितिः।
तत्सिद्ध्यर्थं तु यल्लेख्यं तद्भवेत् स्थितिपत्रकम् ॥१९१॥
अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः।
विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम् ॥१९२॥
उत्तमेषु समस्तेषु अभिशापे समागमे।
वृत्तानुवादलेख्यं यत् तज्ज्ञेयं सन्धिपत्रकम् ॥१९३॥

Ch., p. 130 to 137. Vîr. M., p 188 to 196.

* सर्वान्।

सीमाविवादे निर्णीते सीमापत्रं विधीयते ॥१९४॥

मलैर्यद् भेदितं दग्धं छिद्रितं वीतमेव वा ।
तदन्यत्कारयेल्लेख्यं स्वेदेनोल्लिखितं तथा ॥१९५॥

## लेख्यपरीक्षा ।

राजा क्रियां समाहूय यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ॥१९६॥

देशाचारयुतं वर्षमासपक्षादिवृद्धिमत् ।
ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥१९७॥

वर्णवाक्यक्रियायुक्तमसंदिग्धं स्फुटाक्षरम् ।
अहीनक्रमचिह्नं च लेख्यं तत्सिद्धिमाप्नुयात् ॥१९८॥

स्थानभ्रष्टास्वपङ्क्तिस्थाः संदिग्धा लक्षणच्युताः ।
यदा तु संस्थिता वर्णाः कूटलेख्यं तदा भवेत् ॥१९९॥
देशाचारविरुद्धं यत्संदिग्धं क्रमवर्जितं ।
कृतं च स्वामिना यच्च साक्ष्यहीनं च दुष्यति ॥२००॥
मत्तेनोपाधिभीतेन तथोन्मत्तेन पीड़ितैः ।
स्त्रीभिर्बालास्वतन्त्रैश्च कृतं लेख्यं न सिध्यति ॥२०१॥
साक्षिदोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य वा ।
धनिकस्यापि वा दोषात्तथा धारणकस्य वा ॥२०२॥

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढ़ास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥२०३॥
साक्षिलेखककर्त्तारः कूटतां यान्ति ते तथा ।
तथा दोषाः प्रयोक्तव्या दुष्टैर्लेख्यं प्रदुष्यति ॥२०४॥

Sm. Ch., p. 139 to 144.
Vir. M. p. 117.

न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनोक्तं तु कूटलेख्यं प्रकीर्त्तितम् ॥२०५॥

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगी दण्ड्यस्स्यात् साध्यार्थाच्चापि हीयते ॥२०६॥

एवं दुष्टं नृपस्थाने यस्मिन् तच्च विचार्यते ।
विमृश्य प्राड्विवाकस्सार्धं पञ्चदोषान्निरूपयेत् ॥२०७॥

येन ते कूटतां यान्ति साक्षिलेखककारकाः ।
तेन दुष्टं भवेल्लेख्यं शुद्धैश्शुद्धिं विनिर्दिशेत् ॥२०८॥

धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितं ।
भवेत् कूटं न चेत्कर्त्ता ज्ञातं हीति विभावयेत् ॥२०९॥

त्रिविधस्यापि लेखस्य भ्रान्तिः सञ्जायते नृणाम् ।
ऋणिसाक्षिलेखकानां हस्तोक्त्या साधयेत्ततः ॥२१०॥

दत्तं लेख्ये स्वहस्तं तु ऋणिको यदि निह्नुते ।
पत्रस्थैस्साक्षिभिर्वाच्यो लेखकस्य मतेन वा ॥२११॥

ज्ञाताज्ञातविवादेषु साक्षिभिः पत्रनिर्णयः ।
दूषिते पत्रके वादी तदाकाङ्क्षां निर्दिशेत् ॥२१२॥

प्रत्यक्षमनुमानेन न कदाचित् प्रबाध्यते ।
तस्माल्लेख्यस्य दुष्टस्य वचोभिस्साक्षिणां भवेत् ।
निर्णयः स्वधनार्थं हि पत्रं दूषयति स्वयं ॥२१३॥

ऋणी स्वहस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥२१४॥

अथ पञ्चत्वमापन्नो लेखकास्सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुद्धिः स्यान्न संशयः ॥२१५॥

Sm. Ch. p. 144 to 5.

Vîr. M. p. 197–99

पश्चात्कारनिबद्धं यत्तद्यत्नेन विचारयेत् ।
यदि स्याद् युक्तियुक्तं तु प्रमाणं लिखितं तदा ॥२१६॥
अन्यथा दूरतः कार्यं पुनरेव विनिर्णयेत् ।
अतथ्यं तथ्यभावेन स्थापितं भ्रान्तविभ्रमात् ॥२१७॥
निवर्त्यं तत्प्रमाणं स्यात् यत्नेनापि कृतं नृपैः ।
समुद्रे तु यथा लेख्ये मृतास्सर्वेऽपि तत्स्थिताः ॥
लिखितं तत्प्रमाणं तु मृतेष्वपि हि तेषु वै ॥२१८॥

मुद्राशुद्धं क्रियाशुद्धं भुक्तिशुद्धं सचिह्नकं ।
राज्ञः स्वहस्तसंशुद्धं शुद्धिमायाति शासनम् ॥२१९॥
शक्तस्य सन्निधावर्थो येन लेख्येन भुज्यते ।
वर्षाणि विंशतिं यावत्तत्पत्रं दोषवर्जितं ॥२२०॥

दृष्टे पत्रे स्फुटन्दोषान्नोक्तवान्नृणिको यदि।
ततो विंशतिवर्षाणि स्थितं पत्रं स्थिरम्भवेत् ॥२२१॥
अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः ।
तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता: ॥२२२॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते ।
तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिम् ॥२२३॥
प्राप्तं वा तेन ते किञ्चिद् देयं वाथ निरूपितम् ।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥२२४॥

दर्पणस्थं यथा बिम्बमसत्सदिव दृश्यते ।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुशलाः जनाः ॥२२५॥

कूटोक्तौ साक्षिणां वाक्यं लेखकस्य च पत्रकम् ।
नयेच्छुद्धिं न यः कूटं स दाप्यो दण्डमुत्तमम् ॥२२६॥
स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः ।
स सम्यग्भावितः कार्यो जिह्वापाण्यङ्घ्रिवर्जितः ॥२२७॥

Sm. Ch. p. 145 to 150 Vir. M. p. 199-

न दिव्यैः साक्षिभिर्वापि हीयते लिखितं क्वचित् ।
लेख्यधर्मः सदा श्रेष्ठो ह्यतो नान्येन हीयते ॥२२८॥

तद्युक्तप्रतिलेख्येन तद्विशिष्टेन वा सदा ।
लेख्यक्रिया निरस्येत निरस्यान्येन न क्वचित् ॥२२९॥

लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं च यत् ।
न तत् सिद्धि मवाप्नोति तिष्ठत्स्वपि हि साक्षिषु ॥२३०॥

प्रयुक्ते शाश्वलाभे तु लिखितं यो न दर्शयेत् ।
न याचते च ऋणिकं तत्संदिग्धत्वमाप्नुयात् ॥२३१॥

द्रव्यं गृहीत्वा यल्लेख्यं परस्मै सम्प्रदीयते ।
छद्ममन्येन चारूढं संयतं चान्यवेश्मनि ॥२३२॥
दत्ते हृतेऽथवा द्रव्ये क्वचिल्लिखितपूर्वके ।
एष एव विधिर्ज्ञेयो लेख्यशुद्धिविनिर्णये ॥२३३॥

## भुक्तिनिरूपणम् ।

लिखितं साक्षिणो भुक्तिः प्रमाणत्रयमिष्यते ।
प्रमाणेषु स्मृता भुक्तेस्तल्लेख्यसमता नृणाम् ॥२३४॥

रथ्यानिर्गमनद्वारजलवाहादिसंश्रये ।
भुक्तिरेव तु गुर्वी स्यात् प्रमाणेष्विति निश्चयः ॥२३५॥

नोपभोगबलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥२३६॥

Sm. Ch. p. 151 to 155.

न भोगं कल्पयेत् स्त्रीषु देवराजधनेषु च ।
बालश्रोत्रियवित्ते च मातृतः पितृतः क्रमात् ॥२३७॥

प्रनष्टागमलेख्येन भोगारूढेन वादिना ।
कालः प्रमाणं दानं च कीर्त्त्यानि संसदि ॥२३८॥

भुक्तिस्तु द्विविधा प्रोक्ता सागमाऽनागमा तथा ।
त्रिपुरुषी या स्वतन्त्राऽनागमाऽख्या तु सागमा ॥२३९॥

स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्तेऽनुगमाभावात् क्रमात्त्रिपुरुषागता ॥२४०॥

आहर्ता भुक्तियुक्तोऽपि लेख्यदोषाग्निशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥२४१॥

मुख्या पैतामही भुक्तिः पैतृकी वापि सम्मता ।
वयोऽपेतैरवच्छिन्ना स्थिरा षष्ट्याब्दिका मता ॥२४२॥

चिरन्तनमविज्ञातं भोगं लोभान्न चालयेत् ॥२४३॥

स्वजातिभिर्बान्धवैश्च भुक्तं यत् स्वजनैस्तथा :
भोगात्तत्र न सिद्धिः स्यात् भोगमन्येषु कल्पयेत् ॥२४४॥

---

## अथ युक्तिः ।

अर्थिनाभ्यर्थितो यस्तु विधातव्य प्रयोजयेत् ।
निचतुःपञ्चशतो वा परतस्तट्टषो भवेत् ।२४५॥
दानं प्रज्ञापनाभेदः सम्प्रलोभक्रिया च या ।
चिन्तापनयनश्चैव हेतवो हि विभावकाः ॥२४६॥

एषामन्यतमो यत्र वादिना भावितो भवेत् ।
मूलक्रिया तु तत्र स्याद्भावितो वादिनिक्षवे ॥२४७॥

Sm. Ch. p. 158 to 168. Vir. M. p. 206 to 225.

## अथ साक्षिणः-साक्षिभेदाः ।

अर्थिप्रत्यर्थिसान्निध्यादनुभूतन्तु यद्भवेत् ।
तद् ग्राह्यं साक्षिणो वाक्यमन्यथा न बृहस्पतिः ॥२४८॥

अर्थिना स्वयमानीतो यो लेख्ये सन्निवेश्यते ।
स साक्षी लिखितो नाम स्मारितः पत्रकादृते ॥२४९॥

यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः ।
स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥२५०॥

प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः ।
द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥२५१॥

अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।
यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते ॥२५२॥

साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः[1] ॥२५३॥

अभ्यन्तरस्तु निक्षेपे साक्ष्यमेकोऽपि वाच्यते * ।
अर्थिना प्रहितस्साक्षी भवत्येकोऽपि दूतकः ॥२५४॥

† संस्तुतं येन संन्यस्तं तत् तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्त्तितः[2] ॥२५५॥

व्याघातेषु नृपाज्ञायाः सङ्ग्रहे साहसेषु च ।
स्तेयपारुष्ययोश्चैव न परीक्षेत साक्षिणः ॥२५६॥

ऋणादिषु परीक्षेत साक्षिणस्स्थिरकर्मसु ।
साहसात्ययिके चैव परीक्षा कुत्रचित् स्मृता[3] ॥२५७॥

* याच्यते इति वीरमित्रोदयधृतपाठान्तरम् ।

† संस्तुतं येन यत् पश्य' तत्तेनैव विभावयेत् इति वीरमित्रोदये पाठभेद उपलभ्यते ।

1 Vir. M., p. 143. 2 Vir. M., p. 151. Sm. Ch, p, 175, 3 Sm. Ch., p. 183.

विभाव्यो वादिना यादृक् सदृशैर्विभावयेत् ।
नोत्कृष्टाश्चापकृष्टास्तु साक्षिभिर्भावयेत् ॥२५८॥

प्रख्यातकुलशीलाश्च लोभमोहविवर्जिताः ।
आप्ताः शिष्टाः विबुधा ये तेषां वाक्यमसंशयम् ॥२५९॥

तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः ।
तद्बन्धुसुहृदो भृत्या आप्तास्ते तु न साक्षिणः ॥२६०॥

कुल्याः सम्बन्धिनश्चैव विवाह्यो भगिनीपतिः ।
पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा ॥२६१॥
मातृष्वसृसुताश्चैव सोदर्यासुतमातुलाः ।
एते सनाभयः प्रोक्ताः साक्ष्यन्तेषु न योजयेत् ॥२६२॥

नगरग्रामदेशेषु नियुक्ता ये पदेषु च ।
वल्लभाश्च न पृच्छ्येयुर्भक्तास्ते राजपुरुषाः[1] ॥२६३॥

लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे ।
समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्भृगुः ॥२६४॥

दासचारणमल्लानां हस्त्यश्वायुधजीविनाम् ।
प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः ॥२६५॥
तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः[2] ।

लेख्यारूढश्चोत्तरश्च साक्षी मार्गद्वयान्वितः ॥२६६॥

अथ स्वहस्तेनारूढस्तिष्ठंश्चैकः स एव तु ।
न चेत् प्रत्यभिजानीयात् तत् स्वहस्तैः प्रसाधयेत्[3] ॥२६७॥

साक्षिणां लिखितानां तु निर्दिष्टानां च वादिना ।
तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः[4] ॥२६८॥

1 Sm. Ch., p. 174—180, Vir. M. pp. 149, 160, 2 Vir, M, p, 149,
3 Vir. M, p, 147. 4 Sm. Ch. p. 149.

अन्येन हि कृतस्साक्षी नैवान्यस्तं विवादयेत् ।
तदभावे नियुक्तो वा बान्धवो वा विवादयेत्[1] ॥२६८॥

## साक्ष्युद्भावनं ।

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढ़ास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥२७०॥
लेख्यदोषास्तु ये केचित् साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥२७१॥
उक्तेऽर्थे साक्षिणो यस्तु दूषयेत् प्रागदूषितान् ।
न च तत्कारणं ब्रूयात् प्राप्नुयात् पूर्वसाहसम् ॥२७२॥
नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगी दण्ड्यस्स्यात् साध्यार्थाच्चापि हीयते[2] ॥२७३॥

## साक्ष्यवादविधिः

उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् ॥२७४॥

सभान्तस्थैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं धर्मो ह्यन्यत्र स्थावरेषु तु ॥२७५॥

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृते द्विजान् ।
उदङ्मुखान् प्राङ्मुखान् वा पूर्वाह्णे वा शुचिः शुचीन् ॥२७६॥

सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनानेन सान्त्वयन् ॥२७७॥

यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिं चेष्टितं मिथः ।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता[3] ॥२७८॥

1 Sm, Ch, p, 189. 2 Sm. Ch, 192; Vir, M, p, 163-164.

3 Sm. Ch, p, 206; M, 165—167.

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च संनिधौ ।
प्रत्यक्षं वादयेत् साक्ष्यं न परोक्षे कदाचन ॥२८८॥

अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित् ।
चतुष्पदेष्वयं धर्मो द्विपदस्थावरेषु च ॥२८०॥

वधे चेत् प्राणिनां साक्ष्यं वादयेच्छिवसंनिधौ* ।
तदभावे तु चिह्नस्य नान्यथैव प्रवादयेत् ॥२८१॥

तौलशासनमानार्थमभावेऽपि हि वादयेत् ।
क्रियाकारकेषु सर्वेषु साक्षित्वं न त्वतोऽन्यथा ॥२८२॥

स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ॥२८३॥

स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम् ।
अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थकम् ॥२८४॥

ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
ऊने वाऽप्यधिके वाऽर्थे प्रोक्ते साध्यं न सिध्यति ॥२८५॥

साध्यार्थांशेऽपि गदिते साक्षिभिस्सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकल्पितम् ॥२८६॥

ऊनाधिकं तु यत्र स्यात् तत्साक्ष्यं तत्र वर्जयेत् ।
साक्षी तत्र न दण्ड्यस्स्यादब्रुवन् दण्डमर्हति ॥२८७॥

देशं कालं धनं संख्यां रूपं जात्याकृती वयः ।
विसंवदेद्यत्र साक्ष्ये तदनुक्तं विदुर्बुधाः[1] ॥२८८॥

* भवसंनिधौ इति पाठान्तरं वीरमित्रोदये ।

1 Sm. Ch, pp, 206—289 Vir, M, 167—168.

## साक्ष्यदोषाः दण्डाश्च ।

यः साक्षी नैव निर्दिष्टो नाहूतो नैव दर्शितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः ॥२८९॥

अपृष्टः सर्ववचने पृष्टस्याकथने तथा ।
साक्षिणः सन्निरोद्धव्याः गर्ह्या दण्ड्याश्च धर्मतः ॥२९०॥

वाक्पारुष्ये छले वादे दाप्याः स्युर्विंशतं दमम् ।
ऋणादिवादेषु धनं ते स्युर्दाप्या ऋणं यथा ॥२९१॥

साक्षी साक्ष्यं न चेद्ब्रूयात् समदण्डं वहेदृणम् ।
अतोऽन्येषु विवादेषु त्रिशतं दण्डमर्हति ॥२९२॥

सम्यक्क्रियापरिज्ञाने देयः कालस्तु साक्षिणाम् ।
सन्दिग्धं यत्र साक्ष्यं तु मध्यः स्पष्टं विवादयेत् ॥२९३॥

न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महान् दोषो भवेत् कालाद्धर्मव्यावृत्तिलक्षणः ॥२९४॥

छलाऽन्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः ॥२९५॥

येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥२९६॥

यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत् ।
प्रतिवादी यदा तत्र भावयेत् कार्यमन्यथा ॥२९७॥
बहुभिश्च कुलीनैर्वा पूर्वा स्युः कूटसाक्षिणः ।
न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ॥२९८॥

* * * * * *

यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम् ।
शुद्धाच्च वाक्याच्छुद्धः शुद्धोऽर्थः इति संस्थितिः[1] ॥२९९॥

1 Sm Ch, pp, 212—218 Vir, M, p, 168-174

## दिव्यव्यवस्था ।[1]

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥३००॥

पार्थिवैश्शङ्कितानान्तु निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणाञ्च दिव्यं देयं शिरो विना ॥३०१॥

पार्थिवैश्शङ्कितानां तु तुलादीनि नियोजयेत् ।
आत्मशुद्धिविधाने च न शिरस्तत्र कल्पयेत् ॥३०२॥

लोकापवाददुष्टानां शङ्कितानां च दस्युभिः ।
तुलादीनि नियोज्यानि न शिरस्तत्र वै भृगुः ॥३०३॥

न शङ्कासु शिरः कोशे कल्पयेत्तु कदाचन ॥३०४॥

शङ्काविश्वाससंधाने विभागे रिक्थिनां सदा ।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥३०५॥

दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् ।
स्तेयसाहसयोर्दिव्यं स्वल्पेप्यर्थे प्रदापयेत् ॥३०६॥

सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् ।
हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत् ॥३०७॥

ज्ञात्वा संख्यां सुवर्णस्य शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम् ॥३०८॥

षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटम् ।
विंशद्दशविनाशे तु कोशपानं विधीयते ॥३०९॥

पञ्चाधिकस्य वै नाशे तदर्धार्धस्य तण्डुलाः ।
तदर्धार्धविनाशे तु स्पृशेत् पुत्रादिमस्तकम् ॥३१०॥

[1] Sm. Ch. pp, 224—233, Vir. M. p, 229-231,
Divyas are enumerated by Brihaspati and others but not by Katyayana,

तदर्थधर्मविनाशे तु लौकिक्यश्च क्रियास्मृताः ।
एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते ॥२११॥

## विवादिजात्यादितो व्यवस्था ।

सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तमे ॥२१२॥

न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न क्वचित् ।
तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणम् ॥२१३॥

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव ग्राहयेच्छूद्रवद्द्विजान् ॥२१४॥

मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥२१५॥

लिङ्गिनां प्रमदानां तु मन्त्रयोगक्रियाविदाम् ।
वर्णसङ्करजातानां पापाभ्यासप्रवर्त्तिनाम् ॥२१६॥

एतेष्वेवाभियोगेषु निन्द्येष्वेव च यत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥२१७॥

एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।
नेच्छन्ति साधवो यत्र तत्र शोध्यः स्वकैर्नरैः ॥२१८॥

महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तेषु दिव्यन्तु पापाभ्यासरते भृगुः ॥२१९॥

येषु पापेषु दिव्यानि कर्त्तव्यानि प्रयत्नतः ।
तारयेत् सज्जनैस्तानि नाभिशस्तं त्यजेन्नरः ॥२२०॥

एषु वादेषु दिव्यानि प्रतिषिद्धानि यत्नतः ।
कारयेत् स्वजनैस्तानि नाभिशस्तं त्यजेन्मनुः ॥२२१॥

Sm. Ch. p, 239-242, Vir, M, pp, 236-238,

प्रमदानां इति स्मृतिचन्द्रिकाधृतपाठः ।

अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥२२२॥
तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत् ॥२२३॥
कालदेशविरोधे तु यथायुक्तं प्रकल्पयेत् ।
अन्येन कारयेद्दिव्यं विधिरेष विपर्ययः ॥२२४॥

## दिव्यदेशाः ।

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारि प्रयोजयेत् ॥२२५॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः ॥२२६॥

अदेशकालदत्तानि बहिर्वासकृतानि च ।
व्यभिचारं सदार्थेषु कुर्वन्तीह न संशयः ॥२२७॥

## दिव्यप्रयोगे उदकविधिः ।

शरांस्त्वनायसाग्रांस्तु प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत् ॥
क्षिप्तेषु मज्जनं कार्यं गमनं समकालिकम् ॥२२८॥
शिरोमात्रन्तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धस्तमपि निर्दिशेत् ॥२२९॥

## विषविधिः ।

वत्सनाभनिभम्पीतं वर्णस्थानेन निश्चितं ।
शुक्तिशृङ्गाकृतिभङ्गे विद्यात् तद्वत्सनाभकम् ॥२३०॥
मकच्चोरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात् ।
वात्समेवं समाख्यातं लक्षणं धर्मसाधकैः ॥२३१॥
घनाम्बुदनिभं श्यामं सुपीतं शृङ्गसम्भवम् ।
भङ्गे च शृङ्गवेराभं ख्यातन्तच्छार्ङ्गिणं विषम् ॥२३२॥

रक्तक्षमसितं कुर्यात् कठिनञ्चैव तत्त्वतः ।
अनेन विधिना ज्ञेयं विषं दिव्यविशारदैः ॥२२३॥

पूर्वाह्णे शीतले देशे विषन्देयन्तु देहिनाम् ।
विषेण योजितं सम्यग्निष्टम्भं मधुसाज्यितम् ॥२२४॥

---

अथाग्निविधिः ।

* * * *

प्रज्वलत्यभियुक्तश्चेत् स्थानादन्यत्र दह्यते ।
अदग्धं तं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥२२५॥

---

घटारोपणविधिः ।

* * * *

शिक्यच्छेदे तुलाभङ्गे तथापि तु गणस्य वा ।
शुद्धेस्तु संशये चैव परीक्षेत पुनर्नरम् ॥२२६॥

कोशविधिः ।

सत्यापराधे देवानां पाययित्वाऽऽयुधोदकम् ।
पाप्यो विकारे चायुक्तो नियम्यः शुचिरन्यथा ॥२२७॥

देवताज्ञानपानीयं दिव्यतक्रूलभक्षणे ।
प्रभाते कारिणे देया आदित्यादिसुखाय तु ॥२२८॥

अथ देवविसंवादः त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च ॥२२९॥

Vir. M. p. 274-280 ; 282. Sm. Ch. p. 271-273.

ज्वरातिसारविस्फोटदाहाक्षिपरिपीडनम् ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ॥
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ॥२४०॥

## अथ शपथविधिः ।

यथोपदिश्यते कर्म कर्त्तुरङ्गं न तूयते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः नरः ॥२४१॥

आचतुर्दशकादह्नो यस्य नोराजदैविकम् ।
व्यसनञ्जायते घोरं स ज्ञेयः शपथे शुचिः ॥२४२॥

यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च ।
न चार्त्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ॥२४३॥

## निर्णयादिकृत्यम् ।

सर्वापलापं यः कृत्वा मिथोऽल्पमपि संवदेत् ।
सर्वमेव तु दाप्यः स्यादभियुक्तो बृहस्पतिः ॥२४४॥

अनेकार्थाभियोगेऽपि यावत् संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥२४५॥

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥२४६॥

* ज्वरातिसारविस्फोटशूलाक्षिपरिपीडनं इति वीरमित्रोदय-धृतपाठः ।

Vīr. M. p. 280, 283.    Sm. Ch. pp., 278, 283.

राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् ।
देशाचारेण चान्यांस्तु दुष्टान् संपीड्य दापयेत् ॥१४७॥
रिक्थिनं सुहृदं वाऽपि छलेनैव प्रदापयेत् ॥
शताधं दापयेत् शुद्धमशुद्धो दण्डभाग् भवेत् ॥१४८॥
विषे तोये हुताग्नौ च तुलाकोशे च तण्डुले ।
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥१४९॥
सहस्रं षट्शतं चैव तथा पञ्चशतानि तु ।
चतुस्त्रिद्वेकमेवं च हीनं हीनेषु कल्पयेत् ॥१५०॥

## अथ दण्डविधयः ।

एवं धर्मासनस्थेन सभ्यैनैव विवादिना ।
कार्य्याणां निर्णयो दृश्यो ब्राह्मणैः सह नान्यथा ॥१५१॥
धनदानासहं बुध्वा स्वाधीनं कर्म कारयेत् ।
अशक्तौ बन्धनागारं प्रवेश्यो ब्राह्मणादृते ॥१५२॥
आचार्यस्य पितुर्मातुर्बान्धवानां तथैव च ।
एतेषामपराधेषु दण्डो नैव विधीयते ॥१५३॥
प्राणात्यये तु यत्र स्यादकार्यकरणं कृतम् ।
दण्डस्तत्र तु नैव स्यादेष धर्मो भृगुस्मृतः ॥१५४॥
येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
तेन चेत् क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् ॥१५५॥
प्रव्रज्यावसितं शूद्रं जपहोमपरायणम् ।
वधेन शासयेत् पापं दण्ड्यो वा द्विगुणं दमम् ॥१५६॥
माषपादो द्विपादो वा दण्डो यत्र प्रवर्त्तितः ।
अनिर्दिष्टं तु विज्ञेयं माषकं तत्र कल्पयेत् ॥१५७॥

Sm. Ch. p. 282, 208.

कल्पितो यस्य यो दण्डस्त्वपराधस्तं यत्नतः ।
पणानां ग्रहणं तु स्यात् तन्मूल्यं वाऽथ राजनि ॥२५८॥

यत्रोक्तो माषकैर्दण्डो राजतं तत्र निर्दिशेत् ।
कृष्णलैश्चोक्तमेव स्यादुक्तदण्डविनिश्चयः ॥२५९॥

माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ।
काकणी तु चतुर्भागा माषकस्य पणस्य च ॥
पञ्चनद्यां प्रदेशे तु संज्ञेयं व्यावहारिकी ॥२६०॥

कार्षापणोऽण्डिका ज्ञेया स्ताश्चतस्रस्तु धानकः ।
ते द्वादश सुवर्णास्तु दीनारश्चित्रकः स्मृतः ॥२६१॥

शुद्धिस्तु शास्त्रतस्तेषां चिकित्सा समुदाहृता ।
प्रायश्चित्तं च दण्डं च ताभ्यां सा द्विविधा स्मृता ॥२६२॥[1]

## अथ कृतनिवर्तनम् ।

उन्मत्तेनैव मत्तेन तथा भावान्तरेण वा ।
यद्दत्तं यत्कृतं वाऽथ प्रमाणं नैव तद्भवेत् ॥२६३॥

अस्वतन्त्रकृतं कार्यं तस्य स्वामी निवर्तयेत् ।
न भर्त्ता विवदेतान्यो भीतोन्मत्तकृतादृते ॥२६४॥

न क्षेत्रगृहदासानां दानाधमनविक्रयाः ।
अस्वतन्त्रकृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः ॥२६५॥

प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारं ते कुर्वन्तोप्यनुमोदिताः ॥२६६॥

क्षेत्रादीनां तथैव स्युः भ्राता भ्रातृसुतस्सुतः ।
निसृष्टाः कार्यकरणे गुरुणा यदि गच्छता ॥[2]२६७॥

1 Sm. Ch. p. 298–300.  2 Sm. Ch. p. 305–7.

निसृष्टार्थस्तु यो यस्मिन् तस्मिन्नर्थे प्रभुस्तु सः ।
तद्भर्त्ता तत्कृतं कार्यं नान्यथा कर्त्तुमर्हति ॥२६८॥

पिता स्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव च ।
कनिष्ठो वा ऽविभक्तस्थो दासः कर्मकरस्तथा ॥२६९॥

सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥[1]२७०॥

## अथ निर्णये विशेष-विधिः ।

युक्तियुक्तन्तु कार्यं स्याद्दिव्यं यत्र विवर्जितम् ।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा ॥२७१॥

प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु ।
विरुद्धनियतं प्राहुस्तं धर्मं न विचालयेत् ॥२७२॥

निर्णयन्तु यदा कुर्यात्तेन धर्मेण पार्थिवः ।
व्यवहारचरित्रेण तदा तेनैव बाध्यते ॥२७३॥

विरुद्धं न्यायतो यत्तु चरित्रं कल्प्यते बुधैः ।
एवन्तत्र निरस्येत चरित्रं तु नृपाज्ञया ॥२७४॥

अनेन विधिना युक्तं बाधकं यद्यदुत्तरम् ।
अन्यथाबाधनं यत्र तत्र धर्मो विरुध्यते ॥[2]२७५॥

## अथ पुनर्न्यायः ।

असत्सदिति यः पक्षः सभ्यैरेवावधार्यते ।
तीरितः सोऽनुशिष्टस्तु साक्षिवाक्यात् प्रकीर्त्तितः ॥२७६॥

1 Sm. Ch. p. 308-9 Vir. M. p. 128. 2 Vir. M. p. 120-21.

## पुनर्न्यायः ।

कुलादिभिर्निश्चितेऽपि सन्तोषं न गतस्तु यः ।
विचार्य तत्कृतं राजा कृतम् पुनश्चरेत् ॥२७७॥

## अथाष्टादशपदनिरूपणम् :—

अयप्रोषितनिक्षिप्तबन्धान्वाहितयाचितम् ।
वैश्यहस्तार्पितं चैव सोऽर्थस्तूपनिधिः स्मृतः ॥२७८॥

आधिक्यं न्यूनता चांशे अस्ति नास्तित्वमेव च ।
आभोगभुक्तिस्सीमा च षट् भूवादस्य हेतवः ॥२७९॥

यस्त्वसत्संज्ञितैरङ्गैः परमाक्षिपति क्वचित् ।
अभूतैर्वाऽथ भूतैर्वा निष्ठुरा वाक् स्मृता बुधैः ॥२८०॥

न्यग्भावकरणं वाचा क्रोधात्तु कुरुते यदा ।
वृत्तदेशकुलादीनामश्लीला सा बुधैः स्मृता ॥२८१॥

महापातकयोक्त्री च रागद्वेषकरी च या ।
जातिभ्रंशकरी वाऽथ तीव्रा सा प्रथिता तु वाक् ॥२८२॥

हुङ्कारः कासनं चैव लोके यच्च विगर्हितम् ।
अनुकुर्यादनुब्रूयाद्वाक्पारुष्यं तदोच्यते ॥२८३॥

योऽगुणान् कीर्त्तयेत् क्रोधान्निर्गुणैर्वा गुणान्वताम् ।
अन्यसंज्ञानुयोगी वा वाग्दुष्ट तं नरं विदुः ॥२८४॥

दूतोपचारयुक्तश्चेद्वेलास्थानसंस्थितिः ।
कण्ठकेशाञ्चलग्राहः कर्णनासाकरादिषु ॥
एकस्थानासनाहाराः संग्रहो नवधा स्मृतः ॥२८५॥

परस्त्रियाऽभिभाषेत तीर्थेऽरण्ये गृहेऽपि वा ।
नदीनां चैव संभेदे स संग्रहणमाप्नुयात् ॥२८६॥

उपचारक्रिया केलिः स्पर्शो भूषणवाससाम् ।
सहखट्वासनं चैव सर्वं संग्रहणं स्मृतम् ॥२८७॥

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया ।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥२८८॥

## अथ ऋणादाने ऋणप्रतिदातृनिर्णयः ।

अनेकार्थाभियोगे च यावत् संसाधयेत् धनी ।
साक्षिभि स्तावदेवासौ लभते साधितं धनम् ॥२८९॥

पित्र्यभावे तु दातव्यमृणं पौत्रेण यत्नतः ।
चतुर्थेन यदादत्तं तस्मात् तन्नि निवर्तयेत् ॥२९०॥

विद्यमाने तु रोगार्ते स्वदेशात् प्रोषिते तथा ।
विंशात् संवत्सरां देयमृणं पितृकृतं सुतैः ॥२९१॥

व्याधितोन्मत्तवृद्धानां तथा दीर्घप्रवासिनाम् ।
ऋणमेवंविधम् पुत्रान् जीवतामपि दापयेत् ॥२९२॥

एकच्छायाप्रविष्टानाम् दाप्यो यस्तत्र दृश्यते ।
प्रोषितस्य सुतः सर्वम् पित्र्यर्णं मृतस्य च ॥२९३॥

एकच्छायाश्रितं सर्वं दद्यात्तु प्रोषिते सुतः ।
मृते भर्त्तरि पित्र्यंशं परर्णं न बृहस्पतिः ॥२९४॥

यद्दत्तम् दत्तमेवं वा देयं पैतामहन्तु तत् ।
सदोषव्याहृतं पित्रा नैव देयमृणं क्वचित् ॥२९५॥

Sm. Ch. p. 5-19.

पित्रा हृष्टमृणं यत्तु क्रमायातम् पितामहात् ।
निर्दोषं नोहृतं पुत्रैर्देयं पौत्रैस्तुस्तगुः ॥३९६॥

पैतामहन्तु यत् पुत्रैर्न दत्तं रोगिभिः स्थितैः ।
तत्स्यादेवम्विधं पौत्रैर्देयम् पैतामहं समम् ॥३९७॥

पुत्रेणापि समं देयम् ऋणं सर्वत्र तु पैतृकम् ॥३९८॥

नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित् ।
काले तु विधिना देयं वसेयुर्नरकेऽन्यथा ॥३९९॥

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्य्यश्च नान्यथा दापयेत्सुतम् ॥४००॥

पित्र्ये विद्यमाने तु न च पुत्रो धनं हरेत् ।
देयं तच्चर्णिने द्रव्यं मृते गृह्णंस्तु दाप्यते ॥४०१॥

कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा ।
उपप्लवनिमित्तञ्च विद्यादापत्कृतन्तु तत् ॥४०२॥

कन्यावैवाहिकञ्चैव प्रेतकार्ये च यत्कृतम् ।
एतत्सर्वं प्रदातव्यम् कुटुम्बेन कृतं प्रभोः ॥४०३॥

प्रोषितस्यामतेनापि कुटुम्बार्थमृणं कृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥४०४॥

ऋणं पुत्रकृतं पिता न देयमिति धर्मतः ।
देयं प्रतिश्रुतं यस्मात् यच्च स्यादनुवर्णितम् ॥४०५॥

देयं पुत्रकृतं तस्मात् यच्च स्यादनुवर्णितम् ।
कृत्वा संवादितं यच्च श्रुत्वा चैवानुचोदिम् ॥४०६॥

देयं भार्याकृतमृणं भर्त्रा पुत्रेण मातृकम् ।
भर्तृस्वार्थे कृतं यत् स्यादभिधाय गते दिवम् ॥४०७॥

न च भार्याकृतमृणं कथञ्चित् पत्युराभ*वेत्।
आपत्कृताद्दृते पुंसः कुटुम्बार्थो हि दुस्तरः ॥४०८॥

भर्त्रा पुत्रेण वा सार्द्धं केवलेनात्मना कृतम्।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥४०९॥

मर्त्तुकामेन वा भर्त्रा उक्ता देयमृणं त्वया।
अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया ॥४१०॥

निर्धनैरनपत्यैस्तु यत्कृतं शौण्डिकादिभिः।
यः स्त्रीणामुपभोक्ता तु दद्यात्तदृणमेव हि ॥४११॥

व्यसनाभिप्लुते पुत्रे बाले(लो)वा यत्र दृश्यते।
द्रव्यग्राह्यर्णे तत्र तस्याभावे पुरग्निकृत् ॥४१२॥

पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम्।
योषिद्ग्राहः सुताभावे पुत्रो वात्यन्तनिर्धनः ॥४१३॥

अमतेनैव पुत्रस्य प्रधना यान्यमाश्रयेत्।
पुत्रेणैवापहार्यं तद्धनं दुहितृभिर्विना ॥४१४॥

ऋणार्थमाहरेत्तत्तु न सुखार्थं कदाचन।
अयुक्ते कारणे यस्मात् पितरौ तु न दापयेत् ॥४१५॥

या स्वपुत्रन्तु जह्यात् स्त्री समर्थमपि पुत्रिणी।
आहृत्य स्त्रीधनं तस्य पितृर्णं शोधयेत्सुतः ॥४१६॥

बालपुत्राधिकार्था च भर्त्तारं यान्यमाश्रिता।
आश्रितस्तदृणं दद्याद्बालपुत्राविधिः स्मृतः ॥४१७॥

दीर्घप्रवासिनिर्बन्धुजडोन्मत्तादिलिङ्गिनाम्।
जीवतामपि दातव्यं तत्स्त्रीद्रव्यसमाश्रितैः ॥४१८॥

* पत्युरावहेत् इति कृतिचन्द्रिकाधृत पाठः।

* Sm. Ch. 402—406, 412.
V. R. 59—66.

उपचारादिकमादाय स्वामिने न ददाति यः।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते ऋणी ॥४१९॥

धार्योऽवरुद्धस्त्वार्णिकः प्रकाशं जनसंसदि।
यावच्च दद्याद्देयच्च देशाचारस्थितिर्यथा ॥४२०॥

पीडनेनोपरोधेन साधयेदर्णिकं धनी।
कर्मणा व्यवहारेण सान्त्वेनादौ विभावितः ॥४२१॥

आददीतार्थमेवन्तु व्याजेनाचरितेन च।
राजानं स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत् ॥
रिक्थिनं सुहृदं वापि छलेनैव प्रसाधयेत् ॥४२२॥

वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्भृगुः।
देशाचारेण दाप्याः स्यु र्दृष्टान् सम्पीड्य दापयेत् ॥४२३॥

विण्मूत्रसंज्ञा(शङ्का)गस्य स्नानार्थमागतस्य देहिनः।
पृष्ठतो वानुगन्तव्यं निबन्धं वा समुत्सृजेत् ॥४२४॥

स कृतप्रतिभूश्चैव मोक्तव्यस्तु दिने दिने।
आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः ॥४२५॥

यो दर्शनप्रतिभुवं नाधिगच्छेन्न चाश्रयेत्।
स चारके निरोद्धव्यः स्थाप्यो वावेश्म रक्षिणः ॥४२६॥

न चारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिः।
सोऽनिबद्धः प्रमोक्तव्यो निबद्धः शपथेन वा ॥४२७॥

धनदानासहं(बु)बध्वा स्वाधीनं कर्म कारयेत्।
अशक्तो बन्धनागारे प्रवेश्यो ब्राह्मणादृते ॥
कर्षकान् क्षत्रविट्शूद्रान् समहीनांश्च दापयेत् ॥४२८॥

यदि द्यादावनादिष्टमशुभं कर्म कारयेत्।
प्राप्नुयात् साहसं पूर्वमृणान्मुच्येत चर्णिकः ॥४२९॥

प्राप्तं स्याद्विगुणं द्रव्यं प्रयुक्तं धनिना सदा।
लभेत चेन्न द्विगुणं पुनर्वृद्धिं प्रकल्पयेत् ॥४१०॥

पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम्।
तस्मादर्थात् स हीयेत तत्समं चाप्नुयाद्दमम् ॥४११॥

पितृणां सूनुभिर्जातैर्दानेनैवाधमाहृणात्।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतान् ॥४१२॥

अप्राप्तव्यवहारश्चेत् स्वतन्त्रोऽपीह नर्णभाक्।
ऋणमात्मीयवत् पित्र्यं पुत्रैर्देयं विभावितम् ॥४१३॥

## अथ ऋणसमवाये दुःस्वाधाधमर्णविधिः।

नानार्णसमवाये तु यद्यत् पूर्वकृतं भवेत्।
तत्तदेवाग्रतो देयं राज्ञः स्यात् श्रोत्रियादनु ॥४१४॥

एकाहे लिखितं यत्र तत्र कुर्यादृणं समम्।
यद्वर्णं लक्षणं लाभमन्यथा तु यथाक्रमम् ॥४१५॥

यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत्।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥४१६॥

---

## अथ पुत्रैरदेयानि।

सौराणिकं वृथादानं कामक्रोधप्रतिश्रुतम्।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रैर्न दापयेत् ॥४१७॥

लिखितं शुल्कं वापि देयं यत् प्रतिश्रुतम्।
परपूर्वस्त्रिये तत्र विद्यात् कामकृतं नृणाम् ॥४१८॥

यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य च।
दत्तं तुष्टिकरं यत्तु विद्यात् क्रोधकरं तु तत् ॥४१९॥

* Sm. Ch. 395, 396

## अथ वृद्धिः ।

न स्त्रीभ्यो दासबालेभ्यः प्रयच्छेत् किञ्चिदुद्धृतम् ।
दाता न लभते तत्तु तेभ्यो दत्तन्तु यन्न*वेत् ॥४४०॥

ऋणिकेन तु या वृद्धिरधिका सम्प्रकल्पिता ।
आपत्कालकृता नित्यं दातव्या तु सा कारिता ।
अन्यथाकारिता वृद्धिर्दातव्या न कथञ्चन ॥४४१॥

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पिता ।
प्रयोगो यत्र चैवं स्यादाधिभोगः स उच्यते ॥४४२॥

एकान्तेनैव वृद्धिं तु शोधयेद्यत्र चर्णिकम् ।
प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता ॥४४३॥

---

## अथाकृतवृद्धिः ।

कृत्वोद्धारमदत्त्वा यो याचितश्च दिशं व्रजेत् ।
ऊर्द्धं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥४४४॥

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात् ॥४४५॥

यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् ।
ऊर्द्धं संवत्सरात् तस्य तद्धनं वृद्धिमाप्नुयात् ॥४४६॥

---

## परमवृद्धिः ।

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च ।
तिष्ठति द्विगुणा वृद्धिः फालकीटाविकस्य च ॥४४७॥

* यत्तु इति विवादरत्नाकरे।

* Sm. Ch. 321, 360—366 V. R. 15—16.

तैलानाम् चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा प्रोक्ता गुडस्य लवणस्य च ॥४४८॥

---

## वृद्धिनिषेधः ।

स्वदेशेऽपि स्थितो यस्तु न दद्यात् याचितं क्वचित् ।
तस्ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत् ॥४४८॥

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानमदत्तं चेद् वर्धते पञ्चकं शतम् ॥४५०॥

प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितम् ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥४५१॥

चर्मशस्यासवद्यूतपण्यमूल्येषु सर्वदा ।
स्त्रीशुल्के च न वृद्धिः स्यात् प्रातिभाव्यागतेषु च ॥४५२॥

---

## अथ आधिः ।

अकाममननुज्ञातमाधिं यः कर्म कारयेत् ।
भोक्ता कर्मफलं दाप्यः वृद्धिं वा लभते न सः ॥४५३॥

बलादकामं यश्चाधिमनिसृष्टं प्रवेशयेत् ।
प्राप्नुयात्साहसं पूर्वमाधाता चाधिमाप्नुयात् ॥४५४॥

यश्चाधिं कर्म कुर्वाणं वाचा दण्डेन कर्मभिः ।
पीडयेद्भर्त्सयेच्चैव प्राप्नुयात् पूर्वसाहसम् ॥४५५॥

न च धनिकदोषेण निष्पतेद्वा म्रियेत वा ।
आधिमन्यं स दाप्यः स्याद्धनान्मुच्येत नर्णिकः ॥४५६॥

V. M. P. 17.

Sm. Ch. 364—66, p. 326, 323.

आधीकृतस्तु यत्किंचिद्विनष्टं दैवराजतः ।
तद्द्रव्यं सोदयं दाप्यो धनिनामधमर्णकः ॥४५७॥
आधिमेकं द्वयोर्यत्र कुर्यात् का प्रतिपद् भवेत् ।
द्वयोः पूर्वतरं ग्राह्यमाधाता चौरदण्डभाक् ॥४५८॥

आधिं दुष्टेन लेख्येन भुङ्क्ते यस्त्वधिकाङ्गनो ।
नृपो दमं दापयित्वा आधिस्वं विनाशयेत् ॥४५९॥

## अथाधिसिद्धिः ।

मर्यादाचिह्नितं क्षेत्रं ग्रामं वापि यदा भवेत् ।
ग्रामादयश्च लिख्यन्ते तदा सिद्धिमवाप्नुयात् ॥४६०॥

आधाता यत्र न स्यात्तु धनी बन्धं निवेदयेत् ।
राज्ञे ततः समाख्यातो विक्रेय इति धारणा ॥४६१॥

सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत् ॥४६२॥

## अथ प्रतिभू-विधिः ।

दर्शनप्रतिभूर्यत्र देशे काले च दर्शयेत् ।
यद्यसौ दर्शयेत्तन्न मोक्तव्यः प्रतिभूर्भवेत् ॥४६३॥
दानोपस्थान-विश्वास-विवाद-शपथाय च ।
लग्नकं दापयेद्देयं यथायोगं विपर्यये ।४६४॥

नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम् ।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥४६५॥

* Sm. Ch. 326—327, 333, 335. 348,
V. R. p. 24—48

काले प्रतीते प्रतिभूर्यदि तं नैव दर्शयेत् ।
स तमर्थं प्रदाप्यः स्यात् प्रेते चैवं विधिः स्मृतः ॥४६६॥

यस्यार्थे येन यद्दत्तं विधिनाभ्यर्दितेन तु ।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयात् ॥४६७॥

गृहीत्वा बन्धकं यस्तु दर्शनप्रतिभूः स्थितः ।
विभाव्यो वादिना तत्र दाप्यस्स्यात् तत्सुतोऽप्यृणम् ॥४

प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत्क्वचित् ।
पुत्रेणापि समं देयमृणं सर्वत्र पैतृकम् ॥४६८॥

प्रातिभाव्यं तु यो दद्यात् पीडितः प्रतिभावितः ।
त्रिपक्षात् परतः सोऽर्थं द्विगुणं लब्धुमर्हति ॥४७०॥

सन्ततिः स्त्री पशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसस्याष्टगुणं स्मृतः ॥४७१॥

## अथ निक्षेपः ।

क्रयः प्रोषितनिक्षिप्तो बन्धान्वाहितयाचितम् ।
वैश्यहस्तार्पितश्चैव सोऽर्थस्तूपनिधिः स्मृतः ॥४७२॥

अनुमार्गेण कार्येषु अन्यस्मिन् वचनान्मम ।
दद्यास्त्वमिति यो दत्तः स ह्यन्वाधिरुच्यते ॥४७३॥

निक्षिप्तं यस्य यत्किञ्चित् तत्प्रयत्नेन पालयेत् ।
दैवराजकृतादन्यो विनाशस्तस्य कीर्त्यते ॥४७४॥

अराजदैविकेनापि निक्षिप्तं यत्र नाशितम् ।
ग्रहीतुश्चैव भाग्येन दातुर्नष्टं तदुच्यते ॥४७५॥

ज्ञात्वा द्रव्यवियोगन्तु दाता यत्र विनिक्षिपेत् ।
सर्वोपायविनाशेऽपि ग्रहीता नैव दाप्यते ॥४७६॥

* Sm. Ch—p. 347—358. V. R. 41—48.
\- Sm. Ch. p. 419. V. R. p. 84—89.

ग्राहकस्य हि यद्दोषान्नष्टन्तु ग्राहकस्य तत् ।
तस्मिन्नष्टेऽहृते वापि गृहीता मूल्यमाहरेत् ॥४७७॥

यस्य दोषेण यत्किञ्चिद्विनश्येत क्रियेत वा ।
तद्द्रव्यं सोदयं दाप्यो देवराजहृतादिना ॥४७८॥

सर्व्वं ह्युपनिधिष्वेते विधयः परिकीर्त्तिताः ॥४७९॥

यो याचितकमादाय न दद्यात् प्रतियाचितः ।
स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति यः ॥४८०॥

यदि तत्कार्य्यमुद्दिश्य कालं परिनियम्य वा ।
याचितोऽर्थं हृते तस्मिन्नप्राप्ते न तु दाप्यते ॥४८१॥

याचितानन्तरं नाशे देवराजहृतेऽपि सः ।
तस्मिन्नष्टे गृहीता तु प्रतिदाप्यः सदा भवेत् ॥४८२॥

याच्यमानो न दद्याद्दाप्यस्तत्सोदयं भवेत् ।
प्राप्तकाले हृते कार्य्ये न दद्याद्याचितोऽपि सन् ॥४८३॥

अथ कार्य्यविपत्तिस्तु तस्यैव स्वामिनो भवेत् ।
अप्राप्ते वै स्वकाले तु दाप्यस्तर्ह्यहृतेऽपि तत् ॥४८४॥

ग्राह्यस्तूपनिधिः काले कालहीनन्तु वर्ज्जयेत् ।
कालहीनेऽददद्दण्ड्यं द्विगुणञ्च प्रदाप्यते ॥४८५॥

यैस्तु संस्क्रियते न्यासो दिवसैः परिनिश्चितैः ।
तदूर्ध्वं स्थापयेच्छिल्पी दाप्यो दैवहृतेऽपि तम् ॥४८६॥

स्वरूपेणापि च यत्कर्म्म नष्टञ्चेत्कृतकस्य तत् ।
पर्य्याप्तं दिवसैस्तस्य विनश्येत्तदगर्हितः ॥४८७॥

न्यासदोषाद्विनाशः स्यात्किञ्चिदपि न तत्र दापयेत् ।
दापयेत्किञ्चित्तद्दोषात् संस्कारार्थं यदर्पितम् ॥४८८॥

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम् ।
अज्ञाननाशितं चैव येन दाप्यः स एव तु ॥४८९॥

भक्षिते सोदयन्दाप्यः समन्दाप्य उपेक्षिते ।
किञ्चिदूनं प्रदाप्यं स्याद्द्रव्यमज्ञाननाशितम् ॥४९०॥

## अथास्वामिविक्रयः ।

अस्वामिविक्रयं दानमाधिञ्च विनिवर्त्तयेत् ॥४९१॥(१)

प्रकाशं वा क्रयं कुर्यात् साधुभिर्ज्ञातिभिः सह ।
न तत्राप्या क्रिया प्रोक्ता दैविको न च मानुषी ॥
अलेख्येऽसाक्षिके दैवीं व्यवहारे विनिर्द्दिशेत् ॥४९६॥(?)

प्रकाशं वा क्रयं कुर्यान्मूलं वापि समर्पयेत् ।
मूलानयनकालस्तु देयो योजनसंख्यया ॥४९२॥

यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥४९३॥

अभियोक्ता धनं कुर्यात् प्रथमं ज्ञातिभिः स्वकम् ।
पश्चादात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिः ॥४९४॥

असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ।
विशोधिते क्रये राज्ञे वक्तव्यः स न किञ्चन ॥४९५॥

अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमञ्च सः ॥४९७॥

नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातिभिः स्वकम् ।
अदत्ताव्यक्तविक्रीतं कृत्वा स्वं लभते धनम् ॥४९८॥

यदि स्वं नैव कुरुते ज्ञातिभिर्नाष्टिको धनम् ।
प्रसङ्गविनिवृत्त्यर्थं चौरवद्दण्डमर्हति ॥४९९॥

* Sm. Ch. p. 420—420. V. M p. 363—392. V. R. p 99.

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात्क्रेता विक्रेता यत्र वा हृतः ॥५००॥

स्वामी दत्त्वाऽर्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ।
अर्धं द्वयोरपि हृतं तत्र स्याद्व्यवहारतः ॥५०१॥

अविज्ञातक्रयो दोषस्तथा चापरिपालनम् ।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥५०२॥

---

चौरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमोदयः सर्वद्रव्येष्वयं विधिः ॥५०३। *

## अथ सम्भूयसमुत्थानम् ।

शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥५०४॥

परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञया हृतम् ।
राज्ञे दशांशमुद्धृत्य विभजेरन् यथाविधि ॥५०५॥

चौराणां मुख्यभूतस्तु चतुरोऽशांस्ततो हरेत् ।
शूरोऽशांस्त्रीन् समर्थो द्वौ शिष्टास्त्वेकैकमेव च ॥५०६॥

तेषां चेत् प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं तस्य कार्या समा क्रिया ॥५०७॥

वणिजां कर्षकाणाञ्च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः ॥४०८॥ †

## अथ दत्ताप्रदानिकम् ।

विक्रयश्चैव दानञ्च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत् ॥५०९॥

* Sm. Ch. p. 499—508 , V. R.—101--8. V. M. 374--81.

† Many Slokas seem to be missing. The subject is treated more fully in Bṛhaspati and Nārada. Sm. Ch. p. 438—441, V. R. 114,—126, V, M. 391—399.

विभक्ता अविभक्ता वा दायादाः स्थावरे समाः ।
एकोऽप्यनीशः सर्वत्र दानाधमनविक्रये ॥५१०॥

आपत्काले प्रकर्त्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्तेत इति शास्त्रविनिर्णयः ॥५११॥

सर्व्वस्वं गृहवर्जन्तु कुटुम्बभरणाधिकम् ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्यात्ततोऽन्यथा ॥५१२॥

स्वेच्छया तु प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥५१३॥

स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥५१४॥

अविज्ञातोपलब्ध्यर्थं दानं यत्र निरूपितम् ।
उपलब्धिक्रियालब्धं सा भृतिः परिकीर्त्तिता ॥५१५॥

भयत्राणाय रक्षार्थं तथा कार्यप्रसाधनम् ।
अनेन विधिना लब्धं विद्यात्प्रत्युपकारतः ॥५१६॥

प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्वस्वं तस्य दास्यामीत्युक्तेऽपि न तथा भवेत् ॥५१७॥

कामक्रोधास्वतन्त्रार्त्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासाच्च परीहासाद्यद्दत्तं तत्पुनर्हरेत् ॥५१८॥

या तु कार्यस्य सिद्ध्यर्थमुत्कोचा स्यात् प्रतिश्रुता ।
तस्मिन्नपि प्रसिद्धेऽर्थे न देया सा कथञ्चन ॥५१९॥

तथा प्रागेव दत्ता स्यात्प्रतिदाप्यः स तां बलात् ।
दण्डञ्चैकादशगुणमाहुर्गार्गीयमानवाः ॥५२०॥

स्तेनसाहसिकोद्वृत्तपारदारिकशंसनात् ।
दर्शनाद्वृत्तनष्टस्य तथासत्यप्रवर्त्तनात् ॥५२१॥

प्राप्तमेतैस्तु यत्किञ्चित्तदुत्कोचाख्यमुच्यते ।
न दाता तत्र दण्ड्यः स्यात् मध्यस्थश्चैव दण्डभाक् ॥५२२॥

V. R. p. 128—135, Sm. Ch. p 445—452

## अथ दासकर्मकारादयः ।

विण्मूत्रोत्मार्जनञ्चैव नग्नत्वपरिमर्द्दनम् ।
प्रायो दासीसुताः कुर्युर्गवादिग्रहणाच्च यत् ॥५२३॥

दासस्य तु धनं यत्स्यात् स्वामी तत्र प्रभुः स्मृतः ।
प्रकाशं विक्रयाद्यत्तु न स्वामी धनमर्हति ॥५२४॥

स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः ।
त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रे न विद्यते ॥५२५॥

दासेनोढ़ा त्वदासी या साऽपि दासीत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यथा ॥५२६॥

वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ।
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम् ॥५२७॥

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ।
स्वधर्मत्यागिनोऽन्यत्र दारवद् दासता स्मृता ॥५२८॥

समवर्णेऽपि विप्रन्तु दासत्वं नैव कारयेत् ।
शीलाध्ययनसम्पन्नं तदूनं कर्मकामतः ॥५२९॥

तत्रापि नाशुभं किञ्चित् प्रकुर्वीत द्विजोत्तमः ।
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते ॥५३०॥

क्षत्रविट्शूद्रधर्म्मांस्तु समवर्णे कदाचन ।
कारयेद्दासकर्म्माणि ब्राह्मणं न बृहस्पतिः ॥५३१॥

प्रवज्यावसिता यत्र त्रयो वर्णा द्विजातयः ॥
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविड्भृगुः ॥५३२॥

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञा तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥५३३॥

कामात्तु संश्रितां यश्च दासीं कुर्यात्कुलस्त्रियम् ।
संक्रामयेत्तथान्यत्र दण्ड्यस्तच्चाकृतं भवेत् ॥५३४॥

V. R. p. 144—154, Sm. Ch. p. 460—66 V. M. p. 405—18

स्वदासी यस्तु सङ्गच्छेत्प्रसूता च भवेत्ततः ।
अवेक्ष्य बीजं कार्या स्याददासी सान्वया तु सा ॥५३५॥

बालधात्रीमदासीञ्च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं वा प्राप्नुयात्पूर्वसाहसम् ॥५३६॥

विक्रीयमाणां यो भुक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सम्प्राप्नुयाद्द्विशतं दमम् ॥५३७॥

[ शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत ।
एते कर्मकरा ज्ञेया दासास्तु गृहजातयः ॥*
आ विद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ॥ ]

यस्तु न ग्राहयेत् शिल्पं कर्माण्यन्यानि कारयेत् ।
प्राप्नुयात्साहसं पूर्वं तस्माच्छिष्यो निवर्त्तते ॥५३८॥ †

## अथ वेतनस्यानपाक्रिया ।

कर्मारम्भन्तु यः कृत्वा सर्वं नैव तु कारयेत् ।
बलात्कारयितव्योऽसावकुर्वन्दण्डमर्हति ॥५३९॥

यथा च पथि तद्भाण्डमासिध्येत क्रियेत वा ।
यावानध्वा गतस्तेन तावतो लभते भृतिम् ॥५४०॥

त्यजेत्पथि सहायं यः श्रान्तं रोगार्त्तमेव वा ।
प्राप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥

विनयन्वाहको दाप्यः प्रस्थाने द्विगुणं स्मृतम् ॥५४१॥

गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिने नार्पयेद्यावत्तावद्दाप्यस्तु भाटकम् ॥५४२॥ ‡

* Some slokas seem to be lost ; these occur in Nārada.

† V. R. p. 154—55, Sm. Ch. p. 457

‡ V. R. p. 160—68 ; V. M. p. 419—21, Sm. Ch. p. 473—8

हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः ।
नार्पयेत्तत्तथात्वः संस्थावद्दाप्यः स भाटकम् ॥५४३॥ *

---

## अथ संविद्व्यतिक्रमः ।

समूहा(हि)नान्तु यो धर्मस्तेष धर्मेण ते सदा ।
प्रकुर्युः सर्वकार्याणि स्वधर्मेषु व्यवस्थिताः ॥५४४॥

अविरोधेन धर्मस्य निर्गतं राजशासनम् ।
तस्यैवाचरणं पूर्वं कर्त्तव्यं तु नृपाज्ञया ॥५४५॥

युक्तियुक्तञ्च यो हन्याद् वक्तुर्योऽनवकाशदः ।
अयुक्तञ्चैव यो ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥५४६॥

राज्ञा प्रवर्तितान्धर्मान् यो नरो नानुपालयेत् ।
गर्ह्यः स पापो दण्ड्यश्च लोपयन् राजशासनम् ॥५४७॥

साहसी भेदकारी च गणद्रव्यविनाशकः ।
उच्छेद्याः सर्व एवैते विख्याप्यैवं नृपैर्भृगुः ॥५४८॥

एकपातेऽथ पङ्क्त्या वा सम्भोज्या येन यो भवेत् ।
अकुर्वंस्तत्तथा दण्ड्यस्तस्य दोषमदर्शयन् ॥५४९॥

गणमुद्दिश्य यत्किञ्चित्कृत्वर्णं भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत् ॥५५०॥

†गणानां श्रेणिवर्गाणां गताः स्युर्ये तु मध्यताम् ।
प्राक्तनस्य धनर्णस्य समांशाः सर्व एव ते ॥५५१॥

तथैव भोज्यवैभाज्ययानधर्मक्रियासु च ।
समूहस्थोऽंशभागी स्यात्प्रगतस्त्वंशभाङ् न तु ॥५५२॥ ‡

* Sm. Ch. p. 479.; V. M. p. 420; V. R. p. 168—9

† गणिनां श्रेणिवर्गाणामिति स्मृतिचन्द्रिकाधृतपाठः ।

‡ V. R. p. 179—188; Sm. Ch. p. 525—533

नानापौरसमूहस्तु नैगमस्तु प्रकीर्तितः ।
नानायुधधरव्राताः समवेताः प्रकीर्तिताः ॥५५३॥

समूहो वणिजादीनां पूगः सम्परिकीर्तितः ।
प्रव्रज्यावसिता ये तु पाषण्डाः परिकीर्तिताः ॥५५४॥

ब्राह्मणानां * समूहस्तु गणः सम्परिकीर्तितः ।
शिल्पोपजीविनो ये तु शिल्पिनः परिकीर्तिताः ॥५५५॥

आर्हतसौगतानान्तु समूहः सङ्घ उच्यते ।
चाण्डालश्वपचादीनां समूहो गुल्म उच्यते ॥५५६॥

गणपाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा ।
समूहस्थाश्च ये चान्ये वर्गाख्यास्ते बृहस्पतिः ॥५५७॥

चातुर्वर्ण्यस्य या सूतिरसजात्यादिसम्भवा ।
तस्या धर्माः समुद्दिष्टाः जातिः सा परिकीर्तिता ॥५५८॥ †

---

## अथ विक्रीयासम्प्रदानं क्रीत्वानुशयश्च ।

क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम् ।
स मूल्याद्दशभागन्तु दत्त्वा स्वं द्रव्यमाप्नुयात् ॥५५९॥

अप्राप्तेऽर्थेक्रियाकारि (ले) क्षते नैव प्रदापयेत् ।
एवं धर्मो दशाहात्तु परतोऽनुशयो न तु ॥५६०॥

क्रीत्वा वानुशयात्पण्यं त्यजेद्दोषादि यो नरः ।
अदुष्टमेव काले तु स मूल्याद्दशमं वहेत् ॥५६१॥ ‡

* कुलानां समूहस्तु इति स्मृतिचन्द्रिकाधृतपाठः ।

† V. R. p. 668; Sm. Ch. pp. 40, 524

‡ V. R. p. 191—192, Sm. Ch. 511

क्रीत्वा गच्छन्ननुशयं क्रायो ह्यस्तमुपागते ।
षड्भागं तत्र मूल्यस्य दत्त्वा क्रीतं त्यजेद्गुरु:(बुधः) ॥५६२॥
भूमेर्दशाहोनुशयः क्रेतुर्विक्रेतुरेव च ।
* * * * * * * ॥५६३॥
अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥५६४॥ *

## अथ सीमाविवादः ।

आधिक्यं न्यूनता चास्ते अस्तिनास्तित्वमेव च ।
अभोगी (आभोग)भुक्तिः सीमा च षड् भूवादस्य हेतवः ॥५६५॥

तस्मिन् भोगः प्रयोक्तव्यः स च साक्षिषु तिष्ठति ।
लेख्यारूढश्चेतरश्च साक्षी मार्गद्वयान्वितः ॥५६६॥

तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः ।
स्थावरे षट्प्रकारेऽपि नाश्च कार्या विचारणा ॥५६७॥

क्षेत्रवास्तुतडागेषु कूपोपवनसेतुषु ।
द्वयोर्विवादे सामन्तः प्रत्ययः सर्ववस्तुषु ॥५६८॥

सीमान्तभावात्† सामन्तैः कुर्यात्क्षेत्रादिनिर्णयम् ।
ग्रामसीमासु च तथा तद्वत् नगरदेशयोः ॥५६९॥

स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तेषु कर्तव्य उद्धारो नात्र संशयः ॥५७०॥

संसक्तसक्तदुष्टेषु तत्संसक्ताः प्रकीर्तिताः ।
कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ॥५७१॥
त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह ।
समीक्ष्य कारयेत्सीमामेवं धर्मविदो विदुः ॥५७२॥ ‡

* V. R. p, 197—9, Sm, Ch, p, 512—13

† सामन्तभावे इति पाठान्तरम् ।

‡ V, R, p, 201—203. Sm, Ch, p, 540—45

सामन्ताः साधनं पूर्वमनिष्टोक्तौ गुणान्विताः ।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः ॥५७३॥

बहूनान्तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥४७४॥

अज्ञानेन हि * मुच्यन्ते सामन्ता निर्णयं यदि ।
अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत् ॥
कीर्तिते यदि भेदः स्यात् दण्ड्यास्तूत्तमसाहसम् ॥५७५॥

संसक्तास्त्वथ सामन्तास्तत्संसक्तास्तथोत्तराः ।
संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्तिताः ॥५७६॥

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात् परिरभ्य च ॥५७७॥

ये तत्र सर्वसामन्ताः † पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः सम्प्रकीर्तिताः ॥५७८॥

निष्पाद्यमानं यैर्दृष्टं तत्कार्यं त्रिगुणान्वितैः ।
वृद्धा वा यदि वावृद्धास्ते वृद्धाः परिकीर्तिताः ॥५७९॥

उपश्रवणसम्भोगकार्याख्यानोपचिह्निताः ।
उद्धरन्ति ततो यस्मादुद्धृतास्ते प्रकीर्तिताः ॥५८०॥

सामन्तानुमता सीमा सा ज्ञेया राजकारिता ।
भयवर्जितभूपेन सर्वाभावे स्वयंकृता ॥५८१॥

सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव तु ।
त्रिपक्षपक्षसप्ताहं दैवराजकमिष्यते ॥
वाक्पारुष्ये महीवादे दिव्यानि परिवर्जयेत् ॥५८२॥

* नाज्ञानेन हीति पाठान्तरं ।

† पूर्वसामन्ताः ।

V. R. p. 201—218    Sm. Ch. p. 538—546    V. M. p. 451—458

क्षेत्रकूपतडागानां केदारारामयोरपि ।
गृहप्रासादावसथक्षेत्रदेवगृहेषु च
[ सामन्तप्रत्ययो ज्ञेयः सीमासन्धिविनिर्णयः ॥ ] ॥५८३॥

## अथ गृहादिविवादः ।

मेखलाभ्रमनिष्कासगवाक्षान्नोपधारयेत् ।
प्रणालीं गृहवास्तुञ्च पीडयन्दण्डभाग्भवेत् ॥५८४॥

विषमूत्रोदकचक्राञ्च(वप्रं) वह्निखभ्रनिवेशनम् ।
परस्त्रिदयमुत्सृज्य परकुड्यान्निवेशयेत् ॥५८५॥

निवेशसमयादूर्द्धं नैते योज्याः कदाचन ।
दृष्टिप्रासं प्रणालीञ्च न कुर्यात् परवेश्मसु ॥५८६॥

वर्चःस्थानं वह्निचयं गर्त्तोच्छिष्टाम्बुसेचनम् ।
अत्यारात्परकुड्यस्य न कर्तव्यं कदाचन ॥५८७॥ *

## अथ राजमार्गादयः ।

सर्वजनपदा † येन प्रयान्ति सचतुष्पदाः ।
अनिरुद्धा यथाकामं राजमार्गः स उच्यते ॥५८८॥

न तत्र रोपयेत्किञ्चिन्नोपहन्यात्तु केनचित् ।
गुर्वाचार्यनृपादीनां मार्गादानात्तु दण्डभाक् ॥५८९॥

यस्तत्र सङ्करश्वभ्रान्वृक्षारोपणमेव च ।
कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः ॥५९०॥

* Sm. Ch. p. 551—2 V. M. p. 463—4 V. R. p. 217—220

† सर्वजनाः सदा इति पाठान्तरं ;

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥५८१॥

दूषयन् सिद्धतीर्थानि स्थापितानि महात्मभिः ।
धान्यानि वापनीयानि प्राप्नुयात्पूर्वसाहसम् ॥५८२॥

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पञ्च सञ्जातं क्षेत्रस्वामिषु निर्दिशेत् ॥५८३॥

अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंस्थिता ।
स्वामिनं तु विजानीयाद्यस्य क्षेत्रेषु संस्थिता ॥५८४॥

अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः ।
गृहोद्यानतडागानां संस्कर्त्ता लभते न तु ॥५८५॥

व्ययं * स्वामिनि चायाते न निवेद्य नृपे यदि ।
अथावेद्य प्रयुक्तस्तु तत्कृतं लभते व्ययम् † ॥५८६॥

## अथ कृष्टाकृष्टे विशेषविधिः ।

अशक्तितो न दद्याच्चेत्खिलार्थे यत्कृतो व्ययः ।
तदष्टभागहीनन्तु कर्षकः (फल) कर्षमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिने तु तत् ‡ ॥५८७॥

## अथ शस्यरक्षा घातश्च ।

अजातेष्वेव शस्येषु कुर्यादावरणं महत् ।
दुःखेन हि निवार्यन्ते लब्धास्वादरसा मृगाः ॥५८८॥

दापयेत्पणपादं गां द्वौ पादौ महिषीं तथा ।
तथाजाविकवत्सानां पादो दण्डः प्रकीर्त्तितः ॥५८९॥

अधमोत्तममध्यानां पशूनाञ्चैव ताडने ।
स्वामी तु विवदेद्यत्र तत्र दण्डं प्रकल्पयेत् ॥६००॥

* देयमिति पाठान्तरम् ।

Kātyāyana quoted in Kalpataru.——see V. R. p. 227

† Sm. Ch. p. 551—60 V. M. p. 463—70 V. R. p. 220—25

‡ Sm. Ch. p. 560 V. M. p. 470 V. R. p. 227

क्षेत्रारामविवीतेषु गृहेषु पशुवाटिषु ।
अहत्यं तत्प्रविष्टानां ताडनञ्च बृहस्पतिः * ॥६०१॥

---

## अथ वाक्पारुष्यम् ।

यस्त्वसत्संश्रितैरङ्गैः(ङ्कैः) परमाक्षिपति क्वचित् ।
अभूतैरथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा (बुधैः) ॥६०२॥

न्यङ्गावगूरणं ‡ वाचा क्रोधात्तु कुरुते यदा ।
वृत्तदेशकुलानाञ्च अश्लीला सा बुधैः स्मृता ॥६०३॥

महापातकयोक्त्री च रागद्वेषकरी च या ।
जातिभ्रंशकरी या च तीव्रा सा प्रथिता तु वाक् ॥६०४॥

हुङ्कारः कासनं चैव लोके यच्च विगर्हितम् ।
अनुकुर्यादनुब्रूयाद्वाक्पारुष्यं तथोच्यते ॥६०४॥

योऽगुणान् कीर्त्तयेद्द्वेषान्निर्गुणे वा गुणज्ञताम् ।
अन्यसंज्ञानियोजी च वाग्दुष्टं तं नरं विदुः ॥६०५॥

अदुष्टस्यैव यो दोषान् कीर्त्तयेद्दोषकारणात् ।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥६०६॥

मोहात्प्रमादात्संहर्षात् प्रीत्या वोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दण्डार्द्धं तस्य कल्पयेत् ॥६०७॥

यत्र स्यात्परिहारा(सा ?)र्थं पतितस्तेनकीर्त्तनम् ।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत् ॥६०८॥

अन्यथा तुल्यदोषः स्यान्मिथ्योक्तौ तूत्तमः स्मृतः ।
महता प्रणिधानेन वाग्दुष्टं साधयेन्नरम् ॥६०९॥

* Sm. Ch, p, 487—94

‡ न्यङ्गावकरणमिति— स्मृतिचन्द्रिकावीरमित्रोदयधृतः पाठः ।

अतथ्यं श्राविनं राजा प्रयत्नेन विचारयेत्।
अनृताख्यानशीलानां जिह्वाच्छेदो विशोधनम् * ॥६१०॥

---

## अथ दण्डपारुष्यम्।

उद्गूरणे तु हस्तस्य कार्यो द्वादशको दमः।
स एव द्विगुणः प्रोक्तः पातनेषु सजातिषु ॥६११॥

छर्दिमूत्रपुरीषाद्यैः स्पर्शने स चतुर्गुणः।
षड्गुणः कायमध्ये स्यात् मूर्ध्नि त्वष्टगुणः स्मृतः ॥६१२॥

कर्णौष्ठघ्राणनासाक्षिजिह्वाशिश्नकरस्य तु।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥६१३॥

वाक्पारुष्ये यथैवोक्ताः प्रतिलोमानुलोमतः।
तथैव दण्डपारुष्ये पात्यो दण्डो यथाक्रमम् ॥६१४॥

वाग्दण्डस्ताडनश्चैव येषूक्तमपकारिषु।
हृतं भग्नमुदाप्यास्ते शोध्यं निःस्वैस्तु कर्मणा ॥६१५॥

देहेन्द्रियविनाशे तु यथादण्डं प्रकल्पयेत्।
तथा तुष्टिकरं देयं समुत्थानञ्च पीडकैः॥
समुत्थानव्ययञ्चासौ दद्यादाव्रणरोपणम् ॥६१६॥

हेत्वादिभिर्न पश्येच्चेद्दण्डपारुष्यकारणम्।
तदा साक्षिकृतं तत्र दिव्यञ्चापि नियोजयेत् ॥६१७॥

आभीषणेन दण्डेन प्रहरेद्यस्तु मानवः।
पूर्वं वा पीडितो वाथ स दण्ड्यः परिकीर्त्तितः ॥६१८॥

अस्पृश्यधूर्त्तदासानां म्लेच्छानां पापकारिणाम्।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः ॥६१९॥

मनुष्याणां पशूनाञ्च दुःखाय प्रहृते सति।
यथा महत्तरं दुःखं दण्डं कुर्यात्तथा तथा ॥६२०॥

n. Ch.p, 12—13 V. R. p. 243—58, V. M. p. 482—84.

त्रिपणो द्वादशपणो घाते तु पशुपक्षिणाम् ।
सर्पमार्जारनकुलश्वशूकरवधे नृणाम् ॥६२१॥

गोकुमारीं देवपशूनुक्षाणं वृषभं तथा ।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं दमम् ॥६२२॥

आन्तान्क्षुधार्तांस्तृषितानकाले वाहयेत्तु यः ।
खरगोमहिषोष्ट्रादीन्प्राप्नुयात्पूर्वसाहसम् ॥६२३॥

प्रमापणे प्राणभृतां प्रतिरूपन्तु दापयेत् ।
तस्यानुरूपं मूल्यं वा दाप्य इत्यब्रवीन्मनुः ॥६२४॥

वनस्पतीनां सर्वेषामुपरोधो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥६२५॥

हेत्वादिभिर्नपश्येच्चेत् दण्डपारुष्यकारणं ।
तदा साक्षिकृतन्तत्र दिव्यं चापि नियोजयेत् * ॥६२६॥

---

## अथ स्तेनसाहसिकादीनां दण्डः ।

सान्वयस्तु प्रहारो यः प्रसह्य हरणञ्च यत् ।
साहसन्तु भवेदेवं स्तेयमुक्तं विनिह्नवः ॥६२७॥

तुलामानप्रतिमानप्रतिरूपकलक्षितैः ।
चरन्नलक्षितैर्वापि प्राप्नुयात्पूर्वसाहसम् ॥६२८॥

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
त्र्यङ्गहीनाश्च कर्तव्या दाप्यास्तूत्तमसाहसम् ॥६२९॥

मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ।
अजातौ जातिकरणे विज्ञेयोऽष्टगुणो दमः ॥६३०॥

समुद्गपरिवर्त्तञ्च सारभाण्डञ्च कृत्रिमम् ।
आधानं विक्रयं वापि नयतो दण्डकल्पना ॥६३१॥

* V, B, p, 270--285    V, M, p, 476—482

भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते ।
द्विगुणे द्विशतो दण्डो मूल्यवृद्धौ च बुद्धिमान् ॥६३२॥

येन येन परद्रोहं करोत्यङ्गेन तस्करः ।
छिन्द्यात्तत्तु नृपस्तस्य न करोति यथा पुनः ॥६३३॥

मानवाः सद्य एवाहुः सहोढानां प्रवासनम् !
गौतमानामनिष्टं यत्प्राण्युच्छेदाद्विगर्हितम् ॥६३४॥

सहोढमसहोढं वा तत्त्वागमितसाहसम् ।
संगृह्य चिह्नमावेश्य सर्वस्वैर्विनियोजयेत् ॥६३५॥

अयःसन्दानगुप्ताश्च मन्दभक्ता बलान्विताः ।
कुर्युः कर्माणि नृपतेरामृत्योरिति कौशिकः ॥६३६॥

परदेशाहृतं धनं स्वदेशे यः समाहरेत् ।
गृहीत्वा तस्य तद्द्रव्यं सदण्डं तं विसर्जयेत् ॥६३७॥

अन्यहस्तात्परिभ्रष्टमकामादुद्धृतं भुवि ।
चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात् परीक्षयेत् ॥६३८॥

अचौराद्दापितं द्रव्यं चौरान्वेषणतत्परैः ।
उपलब्धे लभेरंस्ते द्विगुणं तत्र दापयेत् ॥६३९॥

क्रेतारश्चैव भाण्डानां प्रतिग्राहिण एव च ।
समदण्डाः स्मृताः सर्वे ये च प्रच्छादयन्ति तान् ॥६४०॥

क्षतं भङ्गोपमर्दौ वा कुर्याद्द्रव्येषु यो नरः ।
प्राप्नुयात्साहसं पूर्वं द्रव्यभाक् स्वाम्युदाहृतः ॥६४१॥

हरेच्छिन्द्याद्दहेच्चापि देवानां प्रतिमां यदि ।
तद्गृहश्चैव यो भिन्द्यात्प्राप्नुयात्पूर्वसाहसम् ॥६४२॥

प्राकारं भेदयेद्यस्तु पातयेच्छातयेत्तथा ।
बध्नीयादभ्रसो मार्गं प्राप्नुयापूर्वसाहसम् ॥६४३॥

राजक्रीडासु ये सक्ता राजद्रव्युपजीविनः ।
अप्रियस्य तु वक्तारो वधं तेषां प्रकल्पयेत् ॥६४४॥

प्रतिरूपस्य कर्त्तारः प्रेषकाः प्रकराश्च ये ।
राजार्थमोषकाश्चैव प्राप्नुयुर्विविधं वधम् ॥६४५॥

प्रमाणेन तु कूटेन मुद्रया वापि कूटया ।
कार्यन्तु साधयेद्यो वै स दाप्यो दण्डमुत्तमम् ॥६४६॥

एकश्चेद्बहवो हन्युः संरब्धापुरुषंनराः ।
मर्मघाती तु यस्तेषां स घातक इति स्मृतः ॥
व्यापादनेन तत्कारो वधं चित्रमवाप्नुयात् ॥६४७॥

आरम्भकृत्सहायश्च तथा मार्गानुदेशकः ।
आश्रयः शस्त्रदाता च भक्तदाता विकर्म्मिणाम् ॥६४८॥

युद्धोपदेशकश्चैव तद्विनाशप्रवर्त्तकः ।
उपेक्षाकार्य्ययुक्तश्च दोषवक्तानुमोदकः ॥६४९॥

अनिषेधक्षमो यः स्यात्सर्वे ते कार्यकारिणः ।
यथाशक्त्यनुरूपञ्च दण्डमेषां प्रकल्पयेत् ॥६५०॥

स्वदेशघातिनो ये स्युस्तथा मार्गनिरोधकाः ।
तेषां सर्वस्वमादाय राजा शूले निवेशयेत् * ॥६५१॥

---

## अथ स्तेनालाभे हृतदानम् ।

गृहेषु मुषितं राजा चौरग्राहांस्तु दापयेत् ।
आरक्षकांस्तु दिक्पालान्यदि चौरो न लभ्यते ॥६५२॥

* V,R, p, 295—340, 368—75
V, M, p, 501—504 ; also p, 712
Sm. Ch. p, 722 to 735

कामी तु संस्थितो यत्र प्रारब्धकामसाधके ।
ततस्तस्याग्रहणं तच्च प्रासंग्रहणं स्मृतः ॥६६३॥

परस्त्रियाऽभिभाषेत तीर्थेऽरण्ये गृहेऽपि वा ।
नदीनां चैव सम्भेदे स संग्रहणमाप्नुयात् ॥६६४॥

उपकारक्रियाकेलिः स्पर्शो भूषणवाससाम् ।
सहखट्वासनं चैव सर्वं संग्रहणं स्मृतम् ॥६६५॥

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा ।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥६६६॥*

## अथाभिगमदण्डः ।

स्त्रीषु वृत्तोपयोगः ( कृतोपभोगः ) स्यात्प्रसह्य पुरुषो यदा ।
वधस्तत्र प्रवर्त्तेत कार्यातिक्रमणं हि तत् ॥६६७॥

सर्वेषु चापराधेषु पुंसोऽर्थदमस्तथा ।
तदर्धं योषितो दद्युर्वधे पुंसोऽङ्गकर्त्तनम् ॥६६८॥

नास्वतन्त्राः (न स्वतन्त्राः) स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यते ।
प्रभुणा शासनीयास्ताः राजा तु पुरुषं नयेत् ॥६६९॥

प्रोषितस्वामिका नारी प्रापिता यद्यभिग्रहे ।
तावत्सा बन्धने स्थाप्या यावत्स्यादागतः प्रभुः ॥६७०॥

कामार्त्ता स्वैरिणी या तु स्वयमेव प्रकाशयेत् ।
राजादेशेन भोक्तव्या विख्याप्य जनसन्निधौ ॥६७१॥†

* Sm. Ch. p. 18 V. R. p. 382—83.
† V. R. p. 389—405. V, M, p. 504—507.

## अथ स्त्रीधर्मंतरङ्गे स्त्रीरत्ना ।

अग्निमिष्टादिशुश्रूषां बहुभार्यः सवर्णया ।
कारयेत्तद्बहुत्वे चेज्ज्येष्ठया गर्हिता न चेत् ॥६७२॥

या वा स्याद्वीरसूस्तासामाज्ञासम्पादिनी प्रिया ।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥६७३॥

दिनक्रमेण वा कर्म यथाज्यैष्ठ्यं स्वयं स्थितः ।
विभज्य सह वा कुर्युर्यथाज्ञानमशाठ्यवत् ॥६७४॥

स्त्रीणां सौभाग्यतो ज्यैष्ठ्यं विद्ययैव द्विजन्मनाम् ।
नहि स्वल्पेन तपसा भर्त्ता तुष्यति योषिताम् ॥६७४॥

पत्न्या चाप्यवियोगिन्या शुश्रूष्योऽग्निर्विनीतया ।
सौभाग्यवदवैधव्यकाम्यया भर्तृभक्तया ॥६७६॥

भर्तुरादेशवर्तिन्या योषया बहुभिर्व्रतैः ।
अग्निः शुश्रूषितो यत्र सा स्त्री सौभाग्यमाप्नुयात् ॥६७७॥

पतिशुश्रूषयैव स्त्री सर्वान् कामान् समश्नुते ।
दिवं पुनरिहायाता सुखानां सा निधिर्भवेत् ॥६७७॥

पतिमुत्सृज्य मोहात्स्त्री कं कं न नरकं व्रजेत् ।
कृच्छ्रान्मानुषतां प्राप्य किं किं दुःखं न विन्दति ॥६७८॥

मृते भर्त्तरि या साध्वी ब्रह्मचर्ये व्यवस्थिता ।
साऽरुन्धतीसमाचारा ब्रह्मलोके महीयते ॥६८०॥*

* V. R. P. 420—427. Sm. Ch. P. 589—596.

## अथ स्त्रीधर्मे नियोगः परपूर्वाविधिश्च ।

नियोगात्पावनं कुर्याद्यथोक्तं तद्विशुद्धये ।
द्विजस्य स्त्रीषु धर्मोऽयं शूद्रस्यैकै तदाश्रयः ॥६८१॥

सुखार्थं या प्रवृत्ता स्त्री न भर्त्तुः सुतकाम्यया ।
पुत्रन्तु जनयेदेव निन्द्या पापा च सा स्मृता ॥६८२॥

भर्तृगोत्रं समुत्सृज्य नारी यद्यन्यमाश्रिता ।
निन्द्यैव सा स्मृता लोके परपूर्वेति चोच्यते ॥६८३॥

परपूर्वाश्रिता यत्र तत्र स्वामाश्रितः प्रभुः ।
क्रमाहृते तु धर्मोऽयं लब्धा वा स्वामिनो भवेत् ॥६८४॥

निरोद्धव्या तु ताभ्या च परपूर्वापराधतः ।
अधमाध्यानवेचन्तीं ताडयन् दण्डमर्हति ॥६८५॥

चौरहस्तान्नदीवेगाद्दुर्भिक्षाद्देशविप्लवात् ।
निस्तार्य्य वापि कान्ताराल्लब्धा त्यक्ता क्रमागता ६८६॥

आसां भोगे न दोषः स्यादिति शास्त्रविनिश्चयः ।
स्वामिदत्तान्तु गृह्णीयादेषा चेत्र ततोऽन्यथा ॥६८७॥

दीयमानमथात्मानं या नारी नानुमोदते ।
न सा देया न सा ग्राह्या विधिरेष स्मृतो गुरुः ॥६८८॥

न चोत्तमां न चाकामां तथा पुत्रवतीं न च ।
ईदृशीं त्वनुरूपेण निष्क्रयेण प्रमोलयेत् ॥६८९॥*

---

## अथ दायविभागः ।

सकलं द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समैः ।
पितरो भ्रातरश्चैव विभागो धर्म्य उच्यते ॥६९०॥†

* V. R. p. 449—54.

† Sm. Ch. p. 606 & 613. V. M. p. 571.

## अथ जीवद्विभागाही विधिः ।

जीवद्विभागी पिता नैकं पुत्रं विशेषयेत् ।
निर्भाजयेन्न चैवैकमकस्मात् कारणं विना ॥१८१॥

द्व्यंशहरोऽर्धहरो वा पुत्रवित्तार्जनात्पिता ।
मातापि पितरि प्रेते पुत्रतुल्यांशभागिनी ॥१८२॥

अविभक्ते मृते पुत्रे(ऽनुजे) तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥१८३॥

लभेतांशं स पित्र्यन्तु पितृव्यात्तस्य वा सुतात् ।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ॥
लभेत तत्सुतो वापि निवृत्तिः परतो भवेत् ॥१८४॥

पैतामहं समानं स्यात् पितुः पुत्रस्य चोभयोः ।
स्वयं स्वोपार्जिते पित्रा न पुत्रः स्वाम्यमर्हति ॥१८५॥

स्वशक्त्यापहृतं नष्टं स्वयंप्राप्तं च यद्भवेत् ।
एतत्सर्वं पिता पुत्रैर्विभागे नैव दाप्यते ॥१८६॥*

---

## अथावशिष्टविभागः ।

प्रच्छादितन्तु यत्नेन पुनरागत्य तत्समम् ।
भजेरन् भ्रातृभिः सार्धमभावे तु पितुः सुताः ॥१८७॥

अन्योन्यापहृतं यच्च दुर्विभक्तं च यद्भवेत् ।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः ॥१८८॥

विभक्तेनैव यत्प्राप्तं धनं तस्यैव तद्भवेत् ।
हृतं नष्टञ्च यल्लब्धं प्राग्रूपञ्च पुनर्भजेत् ॥१८९॥

* Sm. Ch. p. 647—651. V. R. p. 482—496, V. M. p. 554, 566, 573, 646, D. B. Sec. 44.

बन्धुनापहृतं द्रव्यं बलाद्वैव प्रदापयेत् ।
बन्धूनामविभक्तानां भोगन्नैव प्रदापयेत् ॥७००॥*

## अथाप्राप्तव्यवहारादीनां धनरक्षणम् ।

अप्राप्तव्यवहाराणां च धनं व्ययवर्जितम् ।
न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च ॥७०१॥

प्रोषितस्य तु यो भागो रक्षेयुः सर्वं एव तम् ।
बालपुत्रे मृते रिक्थं रक्ष्यं तत्तु स्वबन्धुभिः ॥
पोगण्डा परतस्तन्तु विभजेरन् यथांशतः ॥७०२॥†

## अथ क्षेत्रजादीनां विभागे विशेषविधिः ।

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः ।
सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः ॥७०३॥

क्षेत्रिकानुमते बीजं यस्य क्षेत्रे प्रजायते ।
तदपत्यं तयोरेव बीजिक्षेत्रिकयोर्मतम् ॥७०४॥

क्षेत्रिकस्यमतेनापि फलमुत्पादयेत्तु यः ।
तस्येह भागिनौ तौ तु न फलं हि विनैकतः ॥७०५॥

क्लीवं विहाय पतितं या पुनर्लभते पतिम् ।
तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः ॥७०६॥‡

*   *   *   *   *

## अथ संसृष्टविभागः ।

संसृष्टानां तु संसृष्टाः पृथक्स्थानां पृथक्स्थिताः ।
अभावेंऽशहराः ज्ञेया निर्बीजान्योन्यभागिनः ॥७०७॥ §

* Sm. Ch. 714—15, V. R. p 526, V. M. p. 707, D. B. Sec.. 176.
† V. M. p. 587.
‡ V. M. p. 604—608, also 615 ; V. R. p. 544. § V. R. p. 605.
* Other Slok ... sing.

## अथापुत्रस्य धनविभागः ।

मृते भर्त्तरि भर्त्रंशं लभेत कुलपालिका ।
यावज्जीवन हि स्वाम्यन्दानाधमनविक्रये ॥७०८॥

व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता ।
दमदानरता नित्यमपुत्त्रापि दिवं व्रजेत् ॥७०९॥

अपुत्त्रा शयनं भर्त्तुः पालयन्ती गुरौ स्थिता ।
भुञ्जीतामरणात्क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः ॥७१०॥

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी ।
अविभक्ते धनांशं तु प्राप्नोत्यामरणान्तिकम् ॥७११॥

भोक्तुमर्हति कृत्स्नांशं गुरुशुश्रूषणे रता ।
न कुर्याद्यदि शुश्रूषां चैत्तपिण्डे नियोजयेत् ॥७१२॥

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका ।
व्यभिचाररता या च स्त्री धनं न च सार्हति ॥७१३॥

पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥७१४॥

विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् ।
भ्राता वा जननी वाथ माता वा तत्पितुः क्रमात् ॥७१५॥*

अपुत्रस्याथ कुलजा पत्नी दुहितरोपि वा ।
तदभावे पिता माता भ्राता पुत्राश्च कीर्त्तिताः ॥७१६॥

---

## अथ विभागानधिकारिणः ।

अक्रमोढ़ासुतश्चैव सगोत्राद्यश्च जायते ।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति ॥७१७॥

* V. M. p. 626—33, 654—5. Sm. Ch. p. 677—93, V. R. p. 511—514. D. B. Sec. 133.

अक्रमोढ़ासुतस्तत्कृतो सवर्णेष यदा पितुः ।
असवर्णप्रसूतश्च क्रमोढ़ायाश्च यो भवेत् ॥७१८॥

प्रतिलोमप्रसूता या तस्याः पुत्रो न रिक्थभाक् ।
ग्रासाच्छादनमत्यर्थं देयं तद्बन्धुभिर्मतम् ॥७१९॥

बन्धूनामप्यभावे तु पित्र्यं द्रव्यं तदाप्नुयात् ।
अपित्र्यं तद्धनं प्राप्तं दापनीया न बान्धवाः ॥७२०॥*
* * * *

---

## अथ विभाज्यानि ।

पैतामहञ्च पित्र्यञ्च यत्किञ्चित्स्वयमर्जितम् ।
दायादानां विभागे तु सर्वमेतद्विभज्यते ॥७२१॥

ऋणं (रिक्थं) प्रीतिप्रदत्तन्तु दत्त्वा शेषं विभाजयेत् ।
आचतुर्थात्तु तद्ग्राह्यं क्रमेणैव तु तत्सुतैः ॥७२२॥

भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् ।
विभागकाले देयं तद्रिक्थिभिः सर्वमेव तु ॥७२३॥

तदृणं धनिने देयं नान्यथैव प्रदापयेत् ।
भावितञ्चेत्प्रमाणेन विरोधात्परतो यदा ॥७२४॥

पित्र्यं पितृणसम्बद्धमात्मीयञ्चात्मना कृतम् ।
ऋणमेवंविधं शोध्यं विभागे बन्धुभिः सह ॥७२५॥

गृहोप(स्कर)करणवाह्याश्च दोह्याभरणकर्मिणः ।
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीद्भृगुः ॥७२६॥

धर्मार्थं प्रीतिदत्तञ्च यदृणं स्वनियोजितम् ।
तदृश्यमानं विभजेच्च दानं पैतृकाद्धनात् ॥७२७॥

* V. R. p. 491. V. M. p. 712. Sm. Ch. p. 630—32. D. B Sec. 76-78.

* * * There are some disconnected slokas on exclusion from inheritance.

उह्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम् ।
गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्त्तितः ॥७२८॥

यज्ञाविश्वाससन्धाने विभागे विद्यानां सदा ।
क्रियासमूहकर्तृत्वे ज्येष्ठमेव प्रदापयेत् ॥७२९॥

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ।
स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम् ॥७३०॥

यथा यथा विभागाप्तं धनं यागार्थतामियात् ।
तथा तथा विधातव्यं विद्वद्भिर्भागगौरवम् * ॥७३१॥

---

## अथ विभक्तलक्षणम् ।

वसेयुर्दशवर्षाणि पृथग्धर्माः पृथक्क्रियाः ।
भ्रातरस्तेऽपि विज्ञेयाः विभक्ताः पैतृकाद्धनात् ॥७३२॥
*　　　*　　　*　　　*　　　*

---

## अथाविभाज्यानि ।

नाविद्यानान्तु वैद्येन देयं विद्याधनात्क्वचित् ।
समविद्याधिकानान्तु देयं वैद्येन तद्धनं ॥७३३॥

परभक्तप्रदानेन प्राप्तविद्यो यदन्यतः ।
तया प्राप्तन्तु तद्वित्तं विद्याप्राप्तं तदुच्यते ॥७३४॥

उपन्यस्ते च यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनन्तु तद्विद्याद्विभागे न विभज्यते ॥७३५॥

शिष्यादार्त्विज्यतः प्रश्नात्सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥७३६॥

* Sm. Ch , pp. 617-36.　V. R , pp 496 98　D. B. Sec. 78.
** Some more Ślokas are missing. Two disconnected verses occur in Sm. Ch. (pp. 719-20).

शिष्याधनन्तु यत्प्राहुर्विभागे न तद्विभज्यते ।
शिष्येष्वपि हि धर्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥७३७॥

विद्यापणकृतश्चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥७३८॥

परं निरस्य यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनन्तु तद्विद्यान्न विभाज्यं बृहस्पतिः ।।७३९॥

विद्याप्रतिज्ञया लब्धं शिष्यादाप्तश्च यद्भवेत् ।
ऋत्विङ्न्यायेन यल्लब्धमेतद्विद्याधनं भृगुः ॥७४०॥

आत्मनः संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥७४१॥

तत्र लब्धन्तु यत्किञ्चिद्धनं शौर्येण तद्भवेत् ।
ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् ॥७४२॥

संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम् ।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते ॥७४३॥

यल्लब्धं लाभकाले तु सजात्या कन्यया सह ।
कन्यागतन्तु तद्वित्तं शुल्कं वृद्धिकरं स्मृतम् ॥७४४॥

वैवाहिकन्तु तद्विद्याद्भार्यया यत्सहागतम् ।
धनमेवंविधं सर्वं विज्ञेयं कर्मसाधकम् ॥७४५॥

विवाहकाले यत्किञ्चिद्वरायोद्दिश्य दीयते ।
कन्यायाः तद्धनं सर्वमविभाज्यं च बन्धुभिः ॥७४६॥

शौर्यप्राप्तं विद्यया च स्त्रीधनं चैव यत्स्मृतम् ।
एतत्सर्वं विभागे तु न च वैभाज्यमर्थिभिः ॥७४७॥

धनं पणनिविष्टन्तु धर्मार्थं यन्निरूपितम् ।
उदकश्चैव दाराश्च निबन्धो यः क्रमागतः ॥७४८॥

धृतं वस्त्रमलङ्कारो नानुरूपस्य यद्भवेत् ।
यथाकालोपयुक्तानि तथा भोज्यानि बन्धुभिः ॥७४९॥

गोप्रचारश्च रथ्या च वस्त्रं यच्चाङ्गयोजितम् ।
प्रयोज्यं न विभज्येत शिल्पार्थश्च बृहस्पतिः ॥७५०॥

देशस्य जातेः सङ्घस्य धर्मो ग्रामस्य यो भृगुः ।
उदितः स्यात्स तेनैव दायभागं प्रकल्पयेत् ॥७५१॥

कुटुम्बं विभृयात् भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात् स लभेताश्रुतोपि सन् ॥७५२॥

कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा ।
शौर्यप्राप्तन्तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥७५३॥

---

कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते ।
पुत्राणां तु त्रयोभागाः साम्यं स्वल्पधने स्मृतम् * ॥७५४॥

---

## अथ स्त्रीधनकृत्यम् ।

ऊढया कन्यया वापि पत्युः पितृगृहेऽथवा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥७५५॥

सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम् ॥७५६॥

सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥७५७॥

न भर्त्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥७५८॥

* V. R., pp. 500-507. Sm. Ch., pp. 635-641.
V. M., pp. 707-710. D. B. Sec. 51, 80, 93, 96, 97.

यदि त्वेकतरोऽप्येषां स्त्रीधनं हरते बलात् ।
स वृद्धिं प्रतिदाप्यः स्याद्दण्डञ्चैव समाप्नुयात् ॥७५९॥

व्याधितं व्यसनस्थञ्च धनिकैर्वोपपीड़ितम् ।
दृष्ट्वा निसृष्टं यत्प्रीत्या दद्यादात्मेच्छया हि सा ॥७६०॥

तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्वकम् ।
मूलमेव स दाप्यः स्याद्यदा स धनवान् भवेत् ॥७६१॥

अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि चेत्प्रतिदाप्यः स तद्धनम् ॥७६२॥

पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।
यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥७६३॥

ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागमृक्थिनस्तथा ॥७६४॥

भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः ।
विद्यमाने तु संरक्षेत् क्षपयेत् तत्कुलेऽन्यथा ॥७६५॥

लिखितस्येति धर्मोऽयं प्राप्ते भर्तृकुले वसेत् ।
व्याधिता प्रेतकाले तु गच्छेद्बन्धुकुलं ततः ॥७६६॥

अपकारक्रियायुक्ता निर्लज्जार्थविनाशिका ।
व्यभिचाररता स्त्री तु स्त्रीधनं न च सार्हति ॥७६७॥

यज्ञार्थं द्रव्यमुत्पन्नं तथाद्रव्यं नियोजयेत् ।
स्थानेषु धर्मयुक्तेषु न स्त्री मूर्खविधर्मिषु ॥७६८॥

भर्त्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैः ।
तिष्ठेद्भर्तृकुले जातु न या पितृकुले वसेत् * ॥७६९॥

---

* Sm Ch., pp. 652, 659-69. V. M., pp. 690-694.
V. R., pp. 510-14. D. B. Sec. 53, 54, 56, 57.

## अथ स्त्रीधनविभागनिर्णयः ।

भगिन्यो बान्धवैः सार्द्धं विभजेयुः सभर्त्तृकाः ।
दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत् ॥७७०॥

अप्रजःस्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि ।
अभावे तदनपत्यानां मातापित्रोस्तदिष्यते ॥७७१॥

आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रियाः ।
बन्धुदत्तं तु बन्धूनामभावे भर्त्तृगामि तत् ॥
स्त्रीधनस्येति धर्मोऽयं विभागस्तु प्रकल्पितः * ॥७७२॥

---

## अथ स्त्रीधनलक्षणम् ।

अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतितः स्त्रियै ।
मातृभ्रातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥७७३॥

प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः ।
भर्त्तुः स्वाम्यं सदा तत्र शेषन्तु स्त्रीधनं भवेत् ॥७७४॥

विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम् ॥७७५॥

यत्पुनर्लभते नारी नीयमाना हि पैतृकात् ।
अध्यावाहनिकं नाम स्त्रीधनं समुदाहृतम् ॥७७६॥

प्रीत्या प्रदत्तं यत्किञ्चिच्छ्वश्र्वा श्वशुरेण वा ।
पादवन्दनिकं यत्तल्लावण्यार्जितमुच्यते ॥७७७॥

* Sm. Ch., pp. 661-667. V. M., pp. 695-705. V. R., pp. 518. D. B. Sec. 61, 71.

विवाहात्परतो यत्तु लब्धं भर्त्तृकुलात्स्त्रिया ।
अन्वाधेयन्तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥७७८॥

ऊर्द्धं लब्धन्तु यत्किञ्चित् संस्कारात् प्रीतितः स्त्रिया ।
भर्त्तुः पित्रोः सकाशाद्वा अन्वाधेयन्तु तद्भृगुः ॥७७९॥

गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम् ।
मूल्यं लब्धञ्च यत्किञ्चिच्छुल्कं तत्परिकीर्त्तितम् ॥७८०॥

तत्र सोपधि यद्दत्तं यच्च योगवशेन वा ।
पित्रा भ्रात्राऽथवा पत्या न तत् स्त्रीधनमुच्यते ॥७८१॥

पितृभ्रात्रैव यद्दत्तं दुहितुः स्थावरं धनम् * ।
अतीतायामप्रजसि भ्रातृगामि तु सर्वदा † ॥७८२॥

---

## अथ द्यूतसमाह्वयः ।

द्यूतं नैव तु सेवेत कामक्रोधविवर्द्धनम् ।
असाधुजननं क्रूरं नराणां द्रव्यनाशनम् ॥७८३॥

ध्रुवं द्यूतात्कलिर्यस्माद्विषम् सर्पमुखादिव ।
तस्माद्राजा निवर्त्तेत विषये व्यसनं हि तत् ॥७८४॥

वर्त्तेत चेत्प्रकाशन्तु द्वारावस्थिततोरणम् ।
प्रसक्तोद्धार्थमार्याणां कारयेत् तत्करप्रदम् ॥७८५॥

सभिकः कारयेद्द्यूतं देयं दद्यात्स्वयं नृपे ।
दशकं तु शतं वृद्धिः गृह्णीयाच्च पराजये ॥७८६॥

* Attributed to Briddha-Kātyāyana in the Dāya-bhāga.

† Sm. Ch., pp. 651-655 ; V. M., pp. 678-694. V. R., pp. 522-24. D. B. Sec. 69 53, 54

जेतुर्द्द्यात्स्वयं द्रव्यं जितं ग्राह्यं विपश्चिकाम् ।
सभ्यो वा सभिकेनैव कितवाञ्जनसंश्रये ॥७८७॥

एकरूपा द्विरूपा वा द्यूते यस्याक्षदेविनः ।
दृश्यते च जयस्तस्य यस्मिन् रथ्या व्यवस्थिता ॥७८८॥

प्रसह्य दापयेद्रव्यं तस्मिन् स्थाने न चान्यथा ।
जितं वै सभिकस्तत्र सभिकप्रत्ययात्क्रिया ॥७८९॥

अनभिज्ञो जितो मोच्योऽभिज्ञो वापि जितो रणः ।
सर्वस्वेऽपि जितेऽभिज्ञं न सर्वस्वं प्रदापयेत् ॥७९०॥

विग्रहे च जये लाभे करणे कूटदेविनाम् ।
प्रमाणं सभिकस्तत्र शुचिः स्यात्सभिको यदि ॥७९१॥

म्लेच्छश्वपाकधूर्त्तानां कितवानां तपस्विनाम् ।
तत्तत्ताचारभेत्तॄणां निश्चये न तु राजनि * ॥७९२॥

---

## अथ प्रकीर्णकतरङ्गः ।

पूर्वोक्तादुक्तशेषं स्यादधिकारच्युतश्च यत् ।
भाषात्य परतन्त्रार्थनिबद्धमसमञ्जसम् ॥७९३॥

दृष्टान्तत्वेन ग्राह्यान्ते पुनरुक्तक्रियाश्रितम् ।
अनेन विधिना यच्च वाक्यं तत्स्यात्प्रकीर्णकम् ॥७९४॥

राजधर्मान् स्वधर्मांश्च सन्दिग्धानाञ्च भाषणम् ।
पूर्वोक्तादुक्तशेषञ्च सर्वं तत्स्यात् प्रकीर्णकम् ॥७९५॥

सन्नागकरणञ्चैव मर्त्ते देयं तथैव च ।
संग्रामचौरभेदो च परदाराभिमर्शनम् ॥७९६॥

* V. R., pp. 611-617.  V. M., pp. 718-720.

गोब्राह्मणजिघांसा च ग्रस्त्र्याघ्रातकस्तथा ।
एतान् दशापराधांस्तु नृपतिः स्वयमन्विषेत् ॥७९७॥

निष्कृतीनामकरणं आज्ञासेधव्यतिक्रमः ।
वर्णाश्रमविलोपश्च वर्णसङ्करलोपनम् ॥७९८॥

निधिर्निष्फलवित्तश्च दरिद्रस्य धनागमः ।
एतांश्चारैः सुविदितान् स्वयं राजा निवारयेत् ॥७९९॥

अनाम्नातानि कार्याणि क्रियावादांश्च वादिनाम् ।
प्रकृतीनां प्रकोपश्च सङ्केतश्च परस्परम् ॥८००॥

अशास्त्रविहितं यच्च प्रजायां सम्प्रवर्त्तते ।
उपायैः सामभेदाद्यैरेतानि शमयेन्नृपः * ॥८०१॥

---

## अथ दण्डतरङ्गः ।

Ψ आचार्यस्य पितुर्मातुर्बान्धवानां तथैव च ।
एतेषामपराधे तु दण्डो नैव विधीयते ॥

मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनि ।
यथोक्तं तस्य तत्कुर्यादनुक्तसाधुकल्पितम् ॥८०२॥

राजानो मन्त्रिणश्चैव विशेषादेनमाप्नुयुः ।
अशासनात्तु पापानां नतानां दण्डधारणात् ॥८०३॥

सचिह्नमपि पापन्तु पृच्छेत् पापस्य कारणम् ।
तदा दण्डं प्रकल्पेत दोषमारोप्य यत्नतः ॥८०४॥

Ψ प्राणात्यये तु यत्र स्यादकार्यकरणं कृतम् ।
दण्डस्तत्र तु नैव स्यादेष धर्मः स्मृतो भृगुः ॥

* V. M., p. 712. V. R., pp. 621-638. Sm. Ch., pp. 771-773

Ψ Occur already in page 35.

सहृत्तानान्तु सर्व्वेषामपराधो यदा भवेत् ।
अवमेनैव दैवात्तु तत्र दण्डं न कल्पयेत् ॥८०५॥

सम्यग्दण्डप्रणेतारो नृपाः पूज्याः सुरैरपि ।
आरम्भे प्रथमं दद्यात् प्रवृत्तौ मध्यमः स्मृतः ॥
यस्य यो विहितो दण्डः पर्य्याप्तस्तु स वै भवेत् ॥८०६॥

Ψ कल्पितो यस्य यो दण्डस्त्वपराधस्य यत्नतः ।
पणानां ग्रहणं तस्यात्तन्मूल्यं वाथ राजनि ॥

अपराधेषु नियतमाच्छुर्गांगोग्मानवाः ।
दण्डनीयः स मौंयिस्यात् प्रथमं नेति गौतमः ॥८०७॥

अर्थवन्तो यतः सन्तो यथोक्तानपि ते दमान् ।
दद्युमेवापग्रास्येयुस्तस्मात्तत्र विनिश्चयः ।८०८॥

तस्माद्दण्डाहताः पापाः येन येनाशुभं पुनः ।
न कुर्य्युस्तत्तदेवैषां कर्त्तव्यमिति निश्चयः ॥८०९॥

समूहस्थाः प्रवृत्ताश्च पापेषु पुरुषाधमाः ।
यथोक्ताद्द्विगुणं दण्डमेकैकस्य प्रकल्पयेत् ॥८१०॥

Ψ प्रव्रज्यावसितं शूद्रं जपहोमपरस्तथा ।
वधेन शासयेत्पापं दाप्यो वा द्विगुणं दमम् ॥

Ψ अस्पृश्यधूर्त्तदासानां नराणां पापकारिणाम् ।
प्रतिलोमप्रसूतानां ताडनं नार्थतो दमः ॥

परतन्त्राश्च ये केचिद्दासत्वे ये च संस्थिताः ।
अनायास्ते तु निर्द्दिष्टाः तेषां दण्डस्तु ताड़नम् ॥८११॥

ताड़नं बन्धनञ्चैव तथैव च विड़म्बनम् ।
एष दण्डो हि दासस्य नार्थदण्डो विधीयते ॥८१२॥

Ψ Occur already in pp. 35-36, and 61.

सुवर्णशतमेकन्तु वधार्हो दण्डमर्हति ।
अङ्गच्छेदे तदर्द्धन्तु विवासे पञ्चविंशतिम् ॥८१३॥

कुलीनार्य्यविशिष्टेषु निकृष्टेष्वनुसारतः ।
सर्वस्वं वा निगृह्यैतान् पुराच्छीघ्रं प्रवासयेत् ॥८१४॥

निर्धना बन्धने स्थाप्या वधं नैव प्रवर्त्तयेत् ।
सर्वेषां पापयुक्तानां विशेषार्थञ्च शास्त्रतः ॥८१५॥

वधाङ्गच्छेदार्हविप्रो निःसङ्गे बन्धने विशेत् ।
तदकर्मवियुक्तोऽसौ वृत्तस्तस्य दमो हि सः ॥८१६॥

कूटसाक्ष्यपि निर्वास्यो विख्याप्योऽसत्प्रतिग्राही ।
अङ्गच्छेदी वियोज्यः स्यात् स्वधर्मे बन्धनेन तु ॥८१७॥

ψ कर्णोष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमं दद्याद्भेदने मध्यमं भृगुः ॥

एतैः समापराधानां तत्राप्येवं प्रकल्पयेत् ।
बालवृद्धातुरस्त्रीणां न दण्डस्ताड़नं दमः ॥८१८॥

स्त्रीधनं दापयेद्दण्डं धार्मिकः पृथिवीपतिः ।
निर्धना प्राप्तदोषा स्त्री ताड़नं दण्डमर्हति ॥८१९॥

अन्यायोपार्जितं धनं (न्यस्तं) कोषे कोषं निवेशयेत् ।
कार्यार्थी कार्यनाशः स्याद्बुद्धिमान् नोपपातयेत् ॥८२०॥

दत्त्वा धनं तद्विप्रेभ्यो सर्वं दण्डसमुत्थितम् ।
पुत्रे राज्यं समासज्य कुर्वीत प्रायणं वने ॥८२१॥

एवञ्चरेत्सदा युक्तो राजा धर्मेषु पार्थिवः ।
हितेषु चैव लोकस्य सर्वान् भृत्यान्नियोजयेत् ॥८२२॥

* V. R., pp. 628-660, 663.

ψ Occurs already in p. 61.

## अथ साहसाद्यै अदण्ड्याः ।

Ψ उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते ।
निवृत्तास्तु यदारम्भात् ग्रहणं न वधः स्मृतः ॥

Ψ आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः ।
वधस्तत्र तु नैव स्यात् पापे हीने वधो भृगुः ॥

उद्यतासिविषाग्निश्च पापोद्यतकरस्तथा ।
आथर्वणेन हन्ता च पिशुनश्चैव राजनि ॥८२३॥

भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः ।
एवमाद्यान्विजानीयात् सर्वानेवाततायिनः ॥८२४॥

यशोवृत्तहरान् पापानाहुर्धर्मार्थहारकान् ।
अनाचारितपूर्वो यस्त्वपराधे प्रवर्त्तते ॥
प्राणद्रव्यापहारे च तं विद्यादाततायिनम् ॥८२५॥

नखिनां शृङ्गिणां चैव दंष्ट्रिणां चाततायिनाम् ।
हस्त्यश्वानां तथाऽन्येषां वधे हन्ता न दोषभाक् ॥८२६॥ *

---

## अथ दण्डमानम् ।

Ψ माषः पादो द्विपादो वा दण्डो यत्र प्रकल्पितः ।
अनिर्दिष्टन्तु सौवर्णं माषकं तत्र कल्पयेत् ॥

Ψ यत्रोक्तो माषको दण्डो राजतं तत्र निर्दिशेत् ।
कृष्णलेषोक्तमेव स्यादुक्तं दण्डविनिश्चये ॥

* Sm. Ch., pp. 729-732. See p. 1.

Ψ Occur already in pages 1, 35, 36.

# APPENDIX I.

## Kātyāyana on Rājadharma (*from the Rāja-nītiprakāśa*).

विनीतः शास्त्रसम्पन्नः कोशशौर्यसमन्वितः ।
ब्रह्मण्यो दानशीलः स्याद् धर्मसत्यपरो नृपः ॥
स्तम्भोपतापपैशुन्यचापलक्रोधवर्जितः ।
प्रगल्भः सन्ततोद्यः सम्भाषी प्रियदर्शनः ॥

वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥

शौर्यविद्यार्थबाहुल्यात् प्रभुत्वाच्च विशेषतः ।
सदा चित्तं नरेन्द्राणां मोहमायाति कारणात् ॥
तस्माच्चित्तं प्रबोद्धव्यं राजधर्मे सदा द्विजैः ।
पवित्रं परमं पुण्यं स्मृतिवाक्यं न लङ्घयेत् ॥

वेदध्वनिप्रभावेण देवाः स्वर्गनिवासिनः ।
तेऽपि तत्र प्रमोदन्ते तस्मात्तु द्विजपूजनात् ॥
तस्माद्यत्नेन कर्त्तव्या द्विजपूजा सदा नृपैः ।
तेन भूयोऽपि शक्रत्वं नरेन्द्रत्वं पुनः पुनः ॥
सुराध्यक्षस्तु शक्रः स्वर्गान्नृपरूपेण तिष्ठति ।
कर्त्तव्यं तेन तन्नित्यं येन तत्त्वं समाप्नुयात् ॥

प्रजानां रक्षणं नित्यं कण्टकानां च शोधनम् ।
द्विजानां पूजनं चैव एतदर्थं कृतो नृपः ॥
यत्र कर्माणि नृपतिः स्वयं पश्यति धर्मतः ।
तत्र साधुसमाचारा निवसेयुः सुखं प्रजाः ॥

श्रोत्रिया विधवा बाला दुर्बलाश्च कुटुम्बिनः ।
एते राजबला राज्ञा रक्षितव्याः प्रयत्नतः ॥

अनाथस्य नृपो नाथस्त्वगृहस्य नृपो गृहम्।
अपुत्रस्य नृपः पुत्रो ह्यपितुः पार्थिवः पिता॥

भूस्वामी तु स्मृतो राजा नान्यद्रव्यस्य सर्वदा।
तत्फलस्य हि षड्भागं प्राप्नुयान्नान्यथैव तु॥
भूतानां तन्निवासित्वात् स्वामित्वं तेन कीर्त्तितम्।
तत्क्रिया बलिषड्भागं शुभाशुभनिमित्तजम्॥

अन्यायेन हि यो राष्ट्रात् करं दण्डं च पार्थिवः।
शस्यभागं च शुल्कं चाप्याददीत स पापभाक्॥
एवं प्रवर्त्तते यस्तु लोभं त्यक्त्वा नराधिपः।
तस्य पुत्राः प्रजायन्ते राष्ट्रं कोषश्च वर्द्धते॥

## APPENDIX II.

*Additions and corrections from the Parāśara-Dharma-Saṃhitā.*

P. D. S., III, p. 7 ; Read after śloka 1.

वि नानार्थेऽवसन्देहे हरणं हार उच्यते।
नानासन्देहहरणात् व्यवहार इति स्मृतः॥

Ditto, p. 21 ; Complete, śloka after no. 4.

द्वे पदे साध्यभेदात्तु पदाष्टादशतां गते।
अष्टादशक्रियाभेदात् भिन्नान्यथ सहस्रधा॥

Ditto, p. 22 ; Read the following before Darśanabidhiḥ, p. 4.

प्रातरुत्थाय नृपतिः शौचं कृत्वा समाहितः।
गुरुं ज्योतिर्विदं वैद्यान्देवान्विप्रान् पुरोहितान्॥
यथार्हमेतान् सम्पूज्य सुपुष्पाभरणैर्नृपः।
अभिवन्द्य च गुर्वादीन् सम्मुखान् प्रविशेत् सभाम्॥

Ditto, p. 33—अपन्यायप्रवृत्तं तु etc. in śloka 25. Read after śloka 37.

P. D. S., III, pp. 86-87—

देशपत्तनगोष्ठेषु पुरग्रामेषु वादिनाम् ।
तेषां स्वसमयैर्धर्मशास्त्रतोऽन्येषु तैः सह ॥
लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥

Ditto, p. 58. Add after śloka 74.

द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद्बाह्यचारिभिः ।
शूद्रादीन् प्रतिभूहीनान्बन्धयेन्निगडेन तु ॥
अतिक्रमेऽपयाते च दण्डयेत्तं पणाष्टकम् ।
नित्यकर्मोपरोधस्तु न कार्यः सर्ववर्णिनाम् ॥

Ditto, p. 66. Read before śloka 90.

सलेखनं वा लभते तदर्धं सप्ताहमेव वा ।
मतिरुत्पद्यते यावद्विवादे वक्तुमिच्छतः ॥

Ditto, p. 70. The P. D. S. adds these lines *e.g.*, read after śloka 103—

अस्वतन्त्रजडोन्मत्तबालदीक्षितरोगिणाम् ।

and connect it with the first line of śloka 103.

P. D. S., III, p. 72, add after the second line of śloka 104—

दत्तेऽपि काले देयं स्यात् पुनः कार्यस्य गौरवात् ॥

Ditto, p. 81, add after śloka 149—

उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दातुमर्हति ॥

Ditto, p. 41—

पूर्वमाक्षारयेद्यस्तु नियतं स्यात् स दण्डभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥
कारणात् पूर्वपक्षोऽपि उत्तरत्वं प्रपद्यते ।
अतः क्रिया तदा प्रोक्ता पूर्वपक्षप्रसाधनी ॥

Ditto, p. 88, add after śloka 169—

क्रिया तु दैविकी प्राप्ता विद्यमानेषु साक्षिषु ।
लेख्ये च प्रतिवादेषु न दिव्यं न च साक्षिणः ॥

P. D. S., III, pp. 91-92, add after śloka 166—

चोदना प्रतिकालं तु युक्तिलेशस्तथैव तु ।
तृतीयः शपथः प्रोक्तस्तत्त्रयं साधयेत् क्रमात् ॥
अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं समाचरेत् ॥
चोदना प्रतिघाते तु युक्तिलेशैः समन्वियात् ।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥
युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥

Ditto, pp. 105-6, add before śloka 271—

सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं नान्यदिष्यते ॥
साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रे विलिख्य तान् सर्वान् वाच्यं प्रत्युत्तरं ततः ॥
प्रतिपत्तौ तु साक्षित्वमर्हन्ति न कदाचन ।
अतोऽन्यथा भावनायाः क्रियया प्रतिवादिना ॥
अभावयन् धनं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम् ।
भाविताः साक्षिणः सर्वे साक्षिधर्मनिराकृताः ॥
प्रत्यर्थिनोऽर्थिनो वापि साक्षिदूषणसाधने ।
प्रस्तुतार्थोपयोगेन व्यवहारान्तरं न च ॥
जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः ॥

Ditto, p. 114, add before śloka 292—

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥

Ditto, p. 130, add after śloka 193—

लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥

P. D. S., III, p. 134 ; add before śloka 203—

लिखितं लिखितेनैव साक्षिमत् साक्षिभिर्हरेत् ।
कूटोक्तौ साक्षिणो वाक्याल्लेखकस्य च पत्रकम् ॥
आढ्यस्य निकटस्थस्य यच्छक्तेन न याचितम् ।
सुवर्णशङ्कया तत्तु लेख्यं दुर्बलतामियात् ॥

Ditto, p. 136 ; add half a verse before śloka 221—

निर्दोषं प्रथितं यत्तु लेख्यं तत् सिद्धिमाप्नुयात् ।

Ditto, p. 136 ; add after śloka 223—

आधानसहितं यत्र ऋणं लेख्ये निवेशितम् ।
कृतं साक्षिप्रमाणं तु स्वल्पभोगेषु तद्विदुः ॥

Ditto, p. 136 ; add after śloka 224—

यदि लब्धं भवेत् किञ्चित् प्रज्ञप्तिर्वा कृता भवेत् ।
प्रमाणमेव लिखितं मृता यद्यपि साक्षिणः ॥

Ditto, p. 141 ; add after śloka 234—

लिखितं साक्षिणो भुक्तिः क्रियाः क्षेत्रगृहादिषु ।
आगमे क्रयदानादौ प्रत्याख्याते चिरन्तने ॥
भुक्तिप्रसाधने मुख्याः प्रथमं तु कृषीवलाः ।
ग्रामण्यः क्षेत्रसामन्तास्तत्सीमापतयः क्रमात् ॥

Ditto, p. 148 ; after śloka 244—

ब्रह्मचारी चरेत् कश्चिद्व्रतं षट्त्रिंशदाब्दिकम् ।
अर्थार्थी चान्यविषये दीर्घकालं वसेन्नरः ॥
समावृत्तोऽव्रती कुर्यात् स्वधनान्वेषणं ततः ।
पञ्चाशदाब्दिको भोगस्तद्धनस्यापहारकः ॥
प्रतिवेदं द्वादशाब्दः कालो विद्यार्थिनां स्मृतः ।
शिल्पविद्यार्थिनां चैव ग्रहणान्तः प्रकीर्त्तितः ॥
सुहृद्भिर्बन्धुभिश्चैषां यत् स्वं भुक्तमपश्यताम् ।
नृपापराधिनां चैव भवेत् कालेन हीयते ॥

P. D. S., III, p. 152 ; add before the half verse 304—

अग्निरापि च दिव्यानि राजभृत्येषु दापयेत् ॥

Ditto, p. 154 ; add after śloka 310, the half-verse—

तदर्धाधस्य नाशे तु लौकिकाश्च क्रियाः स्मृताः ॥

Ditto, p. 186 ; add after 329—

निमज्योत्प्लवते यस्तु दृ(द)श्येत् प्राणिभिर्नरः ।
पुनस्तत्र निमज्जेत् स दंशचिह्नविभावितः ॥

Ditto, pp. 194-5, add before sloka 338—

तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।
मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।
आवाहनादि पूर्वं तु कृत्वा रात्रौ विधानतः ॥

Ditto, p. 204 ; the verse 348 quoted in Parāśara reads—

न दण्डं दापयेच्छूद्रं न शूद्रो दण्डभाग् भवेत् ।

and it is a better reading.

Ditto, p. 208 ; add after śloka 353—

न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम् ।
राष्ट्रादेनं बहिष्कुर्यात् समग्रधनमक्षतम् ॥

Ditto, p. 208 ; add before śloka 355—

चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् ।
शारीरधनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥

Ditto, p. 235 ; add before the section on Ādhi—

आधानं विक्रयो दानं लेख्यसाक्ष्यकृतं यदा ।
एकक्रियाविरुद्धं तु लेख्यं तत्रापहारकम् ॥
अनिर्दिष्टस्य निर्दिष्टं एकत्र च विलेखितम् ।
विशेषलिखितं ज्याय इति कात्यायनोऽब्रवीत् ॥
यो विद्यमानं प्रथममनादिष्टस्वरूपकम् ।
आकाशभूतमानेन अनिर्दिष्टं च तद्भवेत् ॥
यद्यद्यदास्य विद्येत तदादिष्टं विनिर्दिशेत ॥

Ditto, p. 312 ; add before śloka 508—

नर्त्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभते ह्यर्धं गायनास्तु समांशिनः ॥
मनुष्या इंशमर्हन्ति सोऽयं सम्भूयकारिणाम् ।

Ditto, p. 364 ; complete śloka 563 by adding—

द्वादशाहः सपिण्डानामपि चाल्पमत:परम् ॥

Ditto, p. 397 ; add after śloka 582—

सीमान्तवासिसामन्तैः कुर्यात क्षेत्रादिनिर्णयम् ।
ग्रामसीमादिषु तथा तद्वन्नगरदेशयोः ॥

Ditto, p. 446 ; add before śloka 640—

चौराणां भक्तदा ये स्युस्तथाग्न्युदकदायकाः ॥

Ditto, p. 452 ; add in the chapter on Sāhasa—

विना चिह्नैस्तु यत्कार्यं साहसाख्यं प्रवर्त्तते ।
शपथैः स विशोध्यः स्यात् सर्ववादेष्वयं विधिः ॥

Ditto, p. 535 ; add after śloka 710—

अदायिकं राजगामि योषिद्भृत्यौर्ध्वदैहिकम् ।
अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत् ॥

Ditto, p. 554 ; ślokas 771 and 772 quoted in Parāśara read differently, *e. g.*—

आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रिया ।
अभावे तदपत्यानां मातापित्रोस्तदिष्यते ॥
बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् ।

# ERRATA.

| | | Read | | | for |
|---|---|---|---|---|---|
| Sloka | 47 | करोत्ययं | .. | ... | करोत्तयम् |
| ,, | 110 | विजानीयात् | ... | ... | विजाणीयात् |
| ,, | 128 | स्वार्थसिद्धये | ... | ... | सार्थसिद्धये |
| ,, | 146 | बन्धनमर्हति | ... | ... | बन्धतमर्हति |
| ,, | 201 | सिध्यति | ... | ... | सिद्धति |
| ,, | 223 | यावद्वर्षाणि | ... | ... | यावदर्वशानि |
| ,, | 241 | लेख्यदोषान् | ... | ... | लेख्यदोशान् |
| ,, | 309 | धटम् | ... | ... | घटम् |
| ,, | 336 | H. L. धटारोपणविधि: | | ... | धटारोपन विधि: |
| ,, | 373 | धर्मेण | ... | ... | धर्मेन |
| ,, | 396 | पौत्रैस्तु तद्गुरु: | ... | ... | पौत्रैस्तस्तगु: |
| ,, | 406 | अनुचोदितम् | ... | ... | अनुयोदिम् |
| ,, | 459 | आधिक्यम् | ... | ... | आधिख्यम् |
| ,, | 483 | दद्यात्तदाप्य | ... | ... | दद्याद्दाप्य |
| ,, | 486 | दिवसै: | ... | ... | दिवसै |
| ,, | 488 | शिल्पिदोषात् | ... | ... | शिल्तिदोषात् |
| ,, | 647 | संरुध्य | ... | ... | संरुद्धा |
| ,, | 653 | ग्रामान्तेषु | ... | ... | ग्रामान्तरेषु |
| ,, | 654 | नृपेण | ... | ... | नृपेन |
| ,, | 671 | जनसन्निधौ | ... | ... | जनसन्तिधौ |
| ,, | 691 | चवकामकास्मात् | ... | ... | चैवैकस्मात् |
| ,, | 777 | ग्रस्वा | ... | ... | ग्रस्रा |
| ,, | 777 | स्वा | ... | ... | स्रा |
| ,, | 807 | प्राड्गार्गीयमानवा: | | ... | प्राच्छसार्गीयमानवा: |